**हलन्त्यम्॥ लसक_१ = पा_१,३.३॥**
उपदेशे ऽन्त्यं हलित्स्यात्। उपदेश आद्योच्चारणम्। सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र॥

**अदर्शनं लोपः॥ लसक_२ = पा_१,१.६०॥**
प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात्।

**तस्य लोपः॥ लसक_३ = पा_१,३.९॥**
तस्येतो लोपः स्यात्। णादयो ऽणाद्यर्थाः।

**आदिरन्त्येन सहेता॥ लसक_४ = पा_१,१.७१॥**
अन्त्येनेता सहति आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् यथाणिति अ इ उ वर्णानां संज्ञा। एवमच् हल् अलित्यादयः॥

**ऊकालो ऽज्झ्रस्वदीर्घप्लुतः॥ लसक_५ = पा_१,२.२७॥**
उश्च ऊश्च ऊ३श्च वः वां कालो यस्य सो ऽच् क्रमाद् ह्रस्वदीर्घप्लुतसंज्ञः स्यात्। स प्रत्येकमुदात्तादि भेदेन त्रिधा।

**उच्चैरुदात्तः॥ लसक_६ = पा_१,२.२९॥**

**नीचैरनुदात्तः॥ लसक_७ = पा_१,२.३०॥**

**समाहारः स्वरितः॥ लसक_८ = पा_१,२.३१॥**
स नवविधो ऽपि प्रत्येकमनुनासिकत्वाननुनासिकत्वाभ्यां द्विधा॥

**मुखनासिकावचनो ऽनुनासिकः॥ लसक_९ = पा_१,२.८॥**
मुखसहतिनासिकयोच्चार्यमाणो वर्णो ऽनुनासिकसंज्ञः स्यात्। तदित्थम् - अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः। ऌवर्णस्य द्वादश, तस्य दीर्घाभावात्। एचामपि द्वादश, तेषां ह्रस्वाभावात्॥

**तुल्यास्यप्रयत्नं सवर्णम्॥ लसक_१० = पा_१,१.८॥**
ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात्। *(ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम्)*। अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा। ऌतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। एदैतोः कण्ठ तालु। ओदौतोः कण्ठोष्टम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकानुस्वारस्य। <u>यत्नो द्विधा - आभ्यन्तरो बाह्यश्च</u>। <u>आद्यः पञ्चधा</u> - स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृत भेदात्। तत्र स्पृष्टं प्रयतनं स्पर्शानाम्। ईषत्स्पृष्टमन्तःस्थानाम्। ईषद्विवृतमूष्मणाम्। विवृतं स्वराणाम्। ह्रस्वस्यावर्णस्य प्रयोगे संवृतम्। प्रक्रियादशायां तु विवृतमेव। <u>बाह्यप्रयत्नस्त्वेकादशधा</u> - विवारः संवारः श्वासो नादो घोषो ऽघोषो ऽल्पप्राणोमहाप्राण उदात्तो ऽनुदात्तः स्वरतिश्चेति। खरो विवाराः श्वासा अघोषाश्च। हशः संवारा नादा घोषाश्च। वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः। वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः। कादयो मावसानाः स्पर्शाः। यणो ऽन्तःस्थाः। शल ऊष्माणः। अचः स्वराः। -क-ख इति कखाभ्यां प्रगर्धविसर्गसदृशो जिह्वामूलीयः। -प-फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः। अं अः इत्यचः परावनुस्वारविसर्गौ॥

**अणुदित्सवर्णस्य चाप्रत्ययः॥ लसक_११ = पा_१,१.६९॥**
प्रतीयते विधीयत इति प्रत्ययः। अविधीयमानो ऽणुदिच्च सवर्णस्य संज्ञा स्यात्। अत्रैवाण् परेण णकारेण। कु चु टु तु पु एते उदितः। तदेवम् - अ इत्यष्टादशानां संज्ञा। तथेकारोकारौ। ऋकारस्त्रिंशतः। एवं ऌकारो ऽपि। एचो द्वादशानाम्। अनुनासिकाननुनासिकभेदेन यवला द्विधा तेनाननुनासिकास्ते द्वयोर्द्वयोस्संज्ञा।

**परः संनिकर्षः संहता॥ लसक_१२ = पा_१,१.१०९॥**
विर्णानामतिशयितः संनिधिः संहतासिंज्ञः स्यात्॥

**हलो ऽनन्तराः संयोगः॥ लसक_१३ = पा_१,१.७॥**
अज्भिरव्यवहता हलिः संयोगसंज्ञाः स्युः॥

**सुप्तिङन्तं पदम्॥ लसक_१४ = पा_१,४.१४॥**
सुबन्तं तिङन्तं च पदसंज्ञं स्यात्॥

# इति संज्ञाप्रकरणम्

अथाच्सन्धिः

**इको यणचि॥ लसक_१५ = पा_६,१.७७॥**
इकः स्थाने यण् स्यादचि संहितायां विषये। सुधी उपास्य इति स्थिते॥

**तस्मिन्निति निर्दिष्टे पूर्वस्य॥ लसक_१६ = पा_१,१.६६॥**
सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम्॥

**स्थाने ऽन्तरतमः॥ लसक_१७ = पा_१,१.५०॥**
प्रसङ्गे सति सदृशतम आदेशः स्यात्। सुध्य् उपास्य इति जाते॥

**अनचि च॥ लसक_१८ = पा_८,४.४७॥**
अचः परस्य यरो द्वे वा स्तो न त्वचि। इति धकारस्य द्वित्वेन सुध्ध्य् उपास्य इति जाते॥

**झलां जश् झशि॥ लसक_१९ = पा_८,४.५३॥**
स्पष्टम्। इति पूर्वधकारस्य दकारः॥

**संयोगान्तस्य लोपः॥ लसक_२० = पा_८,२.२३॥**
संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात्॥

**अलो ऽन्त्यस्य॥ लसक_२१ = पा_१,१.५२॥**
षष्ठीनिर्दिष्टाऽन्त्यस्याल आदेशः स्यात्। इति यलोपे प्राप्ते - *(यणः प्रतिषेधो वाच्यः)*। सुद्ध्युपास्यः। मद्धरिः। धात्रशः। लाकृतिः॥

**एचो ऽयवायावः॥ लसक_२२ = पा_६,१.७८॥**

एचः क्रमादय् अव् आय् आव् एते स्युरचि॥

**यथासंख्यमनुदेशः समानाम्॥ लसक_२३ = पा_१,३.१०॥**
समसंबन्धी विधिर्यथासंख्यं स्यात्। हरये। विष्णवे। नायकः। पावकः॥

**वान्तो यि प्रत्यये॥ लसक_२४ = पा_६,१.७९॥**
यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः। गव्यम्। नाव्यम्। (*अध्वपरमाणे चि*)। गव्यूतिः॥

**अदेङ् गुणः॥ लसक_२५ = पा_१,१.२॥**
अत् एङ् च गुणसंज्ञः स्यात्॥

**तपरस्तत्कालस्य॥ लसक_२६ = पा_१,१.७०॥**
तः परो यस्मात्स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात्॥

**आद्गुणः॥ लसक_२७ = पा_६,१.८७॥**
अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात्। उपेन्द्रः। गङ्गोदकम्॥

**उपदेशे ऽजनुनासिक इत्॥ लसक_२८ = पा_१,३.२॥**
उपदेशे ऽनुनासिको ऽजित्संज्ञः स्यात्। प्रतिज्ञानुनासिक्याः पाणिनीयाः। लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा॥

**उरण् रपरः॥ लसक_२९ = पा_१,१.५१॥**
ऋ इति त्रिंशतः संज्ञेत्युक्तम्। तत्स्थाने यो ऽण् स रपरः सन्नेव प्रवर्तते। कृष्णर्द्धिः। तवल्कारः॥

**लोपः शाकल्यस्य॥ लसक_३० = पा_८,३.१९॥**

अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाशि परे॥

**पूर्वत्रासिद्धम्॥ लसक_३१ = पा_८,२.१॥**
सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम्। हर इह, हरयिह। विष्ण इह, विष्णविह॥

**वृद्धिरादैच्॥ लसक_३२ = पा_१,१.१॥**
आदैच्च वृद्धिसंज्ञः स्यात्॥

**वृद्धिरेचि॥ लसक_३३ = पा_६,१.८८॥**
आदेचि परे वृद्धिरेकादेशः स्यात्। गुणापवादः। कृष्णैकत्वम्। गङ्गौघः। देवैश्वर्यम्। कृष्णौत्कण्ठ्यम्॥

**एत्येधत्यूठ्सु॥ लसक_३४ = पा_६,१.८९॥**
अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात्। उपैति। उपैधते। प्रष्ठौहः। एजाद्योः किम् ? उपेतः। मा भवान्प्रेदिधत्। (*अक्षादूहन्यामुपिसंख्यानम्*)। अक्षौहणी सेना। (*प्रादूहोढोढ्येषैष्येषु*)। प्रौहः। प्रौढः। प्रौढिः। प्रैषः। प्रैष्यः। (*ऋते च तृतीयासमासे*)। सुखेन ऋतः सुखार्तः। तृतीयेति किम् ? परमर्तः। (*प्रवत्सतरकम्बलवसनार्णदशानामृणे*)। प्रार्णम्, वत्सतरार्णम्, इत्यादि॥

**उपसर्गाः क्रियायोगे॥ लसक_३५ = पा_१,४.५९॥**
प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः। प्र परा अप सम् अनु अव निस् निर दुस् दुर वि आङ् नि अधि अपि अति सु उत् अभि प्रति पर उपि - एते प्रादयः॥

**भूवादयो धातवः॥ लसक_३६ = पा_१,३.१॥**
क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः॥

**उपसर्गादृति धातौ॥ लसक_३७ = पा_६,१.९१॥**
अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात्। प्रार्च्छति॥

**एङि पररूपम्॥ लसक_३८ = पा_६,१.९४॥**
आदुपसर्गादेङादौ धातौ पररूपमेकादेशः स्यात्। प्रेजते। उपोषति॥

**अचो ऽन्त्यादि टि॥ लसक_३९ = पा_१,१.६४॥**
अचां मध्ये यो ऽन्त्यः स आदिर्यस्य तट् टिसंज्ञं स्यात्। (*शकन्ध्वादिषु पररूपं वाच्यम्*)। <u>तच्च टेः</u>। शकन्धुः। कर्कन्धुः मनीषा। आकृतिगणो ऽयम्। मार्त्तण्डः॥

**ओमाङोश्च॥ लसक_४० = पा_६,१.९५॥**
ओमि आङि चात्परे पररूपमेकादेशः स्यात्। शिवायों नमः। शिव एहि॥

**अन्तादिवच्च॥ लसक_४१ = पा_६,१.८५॥**
यो ऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत्। शिवेहि॥

**अकः सवर्णे दीर्घः॥ लसक_४२ = पा_६,१.१०१॥**
अकः सवर्णे ऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात्। दैत्यारः। श्रीशिः। विष्णूदयः। होतृकारः॥

**एङः पदान्तादति॥ लसक_४३ = पा_६,१.१०९॥**
पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात्। हरेऽव। विष्णो ऽव॥

**सर्वत्र विभाषाः गोः॥ लसक_४४ = पा_६,१.१२२॥**
लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः पदान्ते। गोअग्रम्, गो ऽग्रम्। एङन्तस्य किम् ? चित्रग्वग्रम्। पदान्ते किम्? गोः॥

**अनेकाल् शित्सर्वस्य॥ लसक_४५ = पा_१,१.५५॥**

इति प्राप्ते॥

**ङिच्च॥ लसक_४६ = पा_१,१.५३॥**
ङिदनेकाल्प्यन्त्यस्यैव स्यात्॥

**अवङ् स्फोटायनस्य॥ लसक_४७ = पा_६,१.१३३॥**
पदान्ते एङन्तस्य गोरवङ् वाचि। गवाग्रम्, गो ऽग्रम्। पदान्ते किम् ? गवि॥

**इन्द्रे च॥ लसक_४८ = पा_६,१.१२४॥**
गोरवङ् स्यादिन्द्रे। गवेन्द्रः॥

**दूराद्धूते च॥ लसक_४९ = पा_८,२.८४॥**
दूरात्सम्बोधने वाक्यस्य टेः प्लुतो वा॥

**प्लुतप्रगृह्या अचि नित्यम्॥ लसक_५० = पा_६,१.१२५॥**
एते ऽचि प्रकृत्या स्युः। आगच्छ कृष्ण ३ अत्र गौश्चरति॥

**ईदूदेद् द्विवचनं प्रगृह्यम्॥ लसक_५१ = पा_१,१.११॥**
ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात्। हरी एतौ। विष्णू इमौ। गङ्गे अमू॥

**अदसो मात्॥ लसक_५२ = पा_१,१.१२॥**
अस्मात्परावीदूतौ प्रगृह्यौ स्तः। अमी ईशाः। रामकृष्णावमू आसाते। मात्किम् ? अमुके ऽत्र॥

**चादयो ऽसत्वे॥ लसक_५३ = पा_१,४.५७॥**
अद्रव्यार्थाश्चादयो निपाताः स्युः॥

**प्रादयः॥ लसक_५४ = पा_१,४.५८॥**
एते ऽपि तथा॥

**निपात एकाजनाङ्॥ लसक_५५ = पा_१,१.१४॥**
एको ऽज् निपात आङ्वर्जः प्रगृह्यः स्यात्। इ इन्द्रः। उ उमेशः। ऽवाक्यस्मरणयोरङित्् आ एवं नु मन्यसे। आ एवं किल तत्। अन्यत्र ङित्' आ ईषदुष्णम् ओष्णम्॥

**ओत्॥ लसक_५६ = पा_१,१.१५॥**
ओदन्तो निपातः प्रगृह्यः स्यात्। अहो ईशाः॥

**सम्बुद्धौ शाकल्यस्येतावनार्षे॥ लसक_५७ = पा_१,१.१६॥**
सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्यो ऽवैदिके इतौ परे। विष्णो इति, विष्ण इति, विष्णविति॥

**मय उञो वो वा॥ लसक_५८ = पा_८,३.३३॥**
मयः परस्य उञो वो वाचि। किम्वुक्तम्, किमु उक्तम्॥

**इको ऽसवर्णे शाकल्यस्य ह्रस्वश्च॥ लसक_५९ = पा_६,१.१२७॥**
पदान्ता इको ह्रस्वा वा स्युरसवर्णे ऽचि। ह्रस्वविधिसामर्थ्यान्न स्वरसन्धिः। चक्रि अत्र, चक्र्यत्र। पदान्ता इति किम् ? गौर्यौ -.

**अचो रहाभ्यां द्वे॥ लसक_६० = पा_८,४.४६॥**
अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। गौर्य्यौ। (*न समासे*)। वाप्यश्वः॥

**ऋत्यकः॥ लसक_६१ = पा_६,१.१२८॥**

ऋति परे पदान्ता अकः प्राग्वद्वा। ब्रह्म ऋषिः, ब्रह्मर्षिः। पदान्ताः किम्? आर्छत्॥

इत्यच्सन्धिः

अथ हल् सन्धिः

**स्तोः श्चुना श्चुः॥ लसक_६२ = पा_८,४.४०॥**
सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः। रामश्शेते। रामश्चिनोति। सच्चित्। शार्ङ्गिञ्जय॥

**शात्॥ लसक_६३ = पा_८,४.४४॥**
शात्परस्य तवर्गस्य चुत्वं न स्यात्। विश्नः। प्रश्नः॥

**ष्टुना ष्टुः॥ लसक_६४ = पा_८,४.४१॥**
स्तोः ष्टुना योगे ष्टुः स्यात्। रामष्षष्ठः। रामष्टीकते। पेष्टा। तट्टीका। चक्रिण्ढौकसे॥

**न पदान्ताट्टोरनाम्॥ लसक_६५ = पा_८,४.४२॥**
पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात्। षट् सन्तः। षट् ते। पदान्तात्किम् ? ईट्टे। टोः किम् ? सर्पिष्टमम्। (*अनाम्नवतिनगरीणामिति वाच्यम्*)। षण्णवतिः। षण्णगर्य्यः॥

**तोः षि॥ लसक_६६ = पा_८,४.४३॥**
न ष्टुत्वम्। सन्षष्ठः॥

**झलां जशो ऽन्ते॥ लसक_६७ = पा_८,२.३९॥**
पदान्ते झलां जशः स्युः। वागीशः॥

**यरो ऽनुनासिके ऽनुनासिको वा॥ लसक_६८ = पा_८,४.४५॥**
यरः पदान्तस्यानुनासिके परे ऽनुनासिको वा स्यात्। एतन्मुरारिः, एतद् मुरारिः। (*प्रत्यये भाषायां नित्यम्*)। तन्मात्रम्। चिन्मयम्॥

**तोर्लि॥ लसक_६९ = पा_८,४.६०॥**
तवर्गस्य लकारे परे परसवर्णः। तवर्गस्य लकारे परे परसवर्णः। तल्लयः। विद्वांल्लिखति। नस्यानुनासिको लः।

**उदः स्थास्तम्भोः पूर्वस्य॥ लसक_७० = पा_८,४.४१॥**
उदः परयोः स्थास्तम्भोः पूर्वसवर्णः॥

**तस्मादित्युत्तरस्य॥ लसक_७१ = पा_१,१.६७॥**
पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम्॥

**आदेः परस्य॥ लसक_७२ = पा_१,१.५४॥**
परस्य यद्विहितं तत्तस्यादेर्बोध्यम्। इति सस्य थः॥

**झरो झरि सवर्णे॥ लसक_७३ = पा_८,४.६५॥**
हलः परस्य झरो वा लोपः सवर्णे झरि॥

**खरि च॥ लसक_७४ = पा_८,४.५५॥**
खरि झलां चरः। इत्युदो दस्य तः। उत्थानम्। उत्तम्भनम्॥

**झयो हो ऽन्यतरस्याम्॥ लसक_७५ = पा_८,४.६२॥**
झयः परस्य हस्य वा पूर्वसवर्णः। नादस्य घोषस्य संवारस्य महाप्राणस्य तादृशो वर्गचतुर्थः। वाग्घरिः, वाघरिः॥

**शश्छो ऽटि॥ लसक_७६ = पा_८,४.६३॥**
झयः परस्य शस्य छो वाटि। तद् शिव इत्यत्र दस्य श्चुत्वेन जकारे कृते खरि चेति जकारस्य चकारः। तच्छिवः, तच्शिवः। (*छत्वममीति वाच्यम्*) तच्छलोकेन॥

**मो ऽनुस्वारः॥ लसक_७७ = पा_८,३.२३॥**
मान्तस्य पदस्यानुस्वारो हलि। हरिं वन्दे॥

**नश्चापदान्तस्य झलि॥ लसक_७८ = पा_८,३.२४॥**
नस्य मस्य चापदान्तस्य झल्यनुस्वारः। यशांसि। आक्रंस्यते। झलि किम् ? मन्यते॥

**अनुस्वारस्य ययि परसवर्णः॥ लसक_७९ = पा_८,४.५८॥**
स्पष्टम्। शान्तः॥

**वा पदान्तस्य॥ लसक_८० = पा_८,४.५९॥**
त्वङ्करोषि, त्वं करोषि॥

**मो राजि समः क्वौ॥ लसक_८१ = पा_८,३.२५॥**
क्विबन्ते राजतौ परे समो मस्य म एव स्यात्। सम्राट्॥

**हे मपरे वा॥ लसक_८२ = पा_८,३.२६॥**
मपरे हकारे परे मस्य मो वा। किम् ह्मलयति, किं ह्मलयति। (*यवलपरे यवला वा*)/ किंय्ह्यः, किं ह्यः। किंव्ह्वलयति, किं ह्वलयति। किंल् ह्लादयति, किं ह्लादयति॥

**नपरे नः॥ लसक_८३ = पा_८,३.२७॥**
नपरे हकारे मस्य नो वा। किन् ह्नुते, किं ह्नुते॥

**आद्यन्तौ टकितौ॥ लसक_८४ = पा_१,१.४६॥**
टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः॥

**ङ्णोः कुक्टुक् शरि॥ लसक_८५ = पा_८,३.२८॥**
वा स्तः। (*चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्*)। प्राङ्ख् षष्ठः, प्राङ्क्षष्ठः, प्राङ् षष्ठः। सुगण्ठ् षष्ठः सुगण्ट् षष्ठः, सुगण् षष्ठः॥

**डः सि धुट्॥ लसक_८६ = पा_८,३.२९॥**
डात्परस्य सस्य धुड्वा। षट्त्सन्तः, षट् सन्तः॥

**नश्च॥ लसक_८७ = पा_८,३.३०॥**
नान्तात्परस्य सस्य धुड्वा। सन्त्सः, सन्सः॥

**शि तुक्॥ लसक_८८ = पा_८,३.३१॥**
पदान्तस्य नस्य शे परे तुग्वा। सञ्छम्भुः, सञ्च्छम्भुः, सञ्चशम्भुः, सञ्शम्भुः॥

**ङमो ह्रस्वादचि ङमुण् नित्यम्॥ लसक_८९ = पा_८,३.३२॥**
ह्रस्वात्परे यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो ङमुट्। प्रत्यङ्ङात्मा। सुगण्णीशः। सन्नच्युतः॥

**समः सुटि॥ लसक_९० = पा_८,३.५॥**
समो रुः सुटि॥

**अत्रानुनासिकः पूर्वस्य तु वा॥ लसक_९१ = पा_८,३.२॥**
अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा॥

**अनुनासिकात्परो ऽनुस्वारः॥ लसक_९२ = पा_८,३.४॥**
अनुनासिकं विहाय रोः पूर्वस्मात्परो ऽनुस्वारागमः॥

**खरवसानयोर्विसर्जनीयः॥ लसक_९३ = पा_८,३.१५॥**
खरि अवसाने च पदान्तसाय रेफस्य विसर्गः। *(संपुंकानां सो वक्तव्यः)*। संस्स्कर्ता, संस्स्कर्ता॥

**पुमः खय्यम्परे॥ लसक_९४ = पा_८,३.६॥**
अम्परे खयि पुमो रुः। पुंस्कोकिलः, पुंस्कोकिलः॥

**नश्छव्यप्रशान्॥ लसक_९५ = पा_८,३.७॥**
अम्परे छवि नान्तस्य पदस्यरुः न तु प्रशान्शब्दस्य॥

**विसर्जनीयस्य सः॥ लसक_९६ = पा_८,३.३४॥**
खरि। चक्रिंस्त्रायस्व, चक्रिंस्त्रायस्व। अप्रशान् किम्? प्रशान्तनोति। पदस्येति किम्? हन्ति॥

**नॄन् पे॥ लसक_९७ = पा_८,३.१०॥**
नॄनित्यस्य रुर्वा पे॥

**कुप्वोः एक एपौ च॥ लसक_९८ = पा_८,३.३७॥**
कवर्गे पवर्गे च विसर्गस्य एक एपौ स्तः, चाद्विसर्गः। नॄं पाहि, नॄंः पाहि, नॄंः पाहि। नॄन् पाहि॥

**तस्य परमाम्रेडितम्॥ लसक_९९ = पा_८,१.२॥**
द्विरुक्तस्य परमाम्रेडितम् स्यात्॥

**कानाम्रेडिते॥ लसक_१०० = पा_८,३.१२॥**
कान्नकारस्य रुः स्यादाम्रेडिते। कांस्कान्, कांस्कान्॥

**छे च॥ लसक_१०१ = पा_६,१.७३॥**
ह्रस्वस्य छे तुक्। शिवच्छाया॥

**पदान्ताद्वा॥ लसक_१०२ = पा_६,१.७९॥**
दीर्घात् पदान्तात् छे तुग्वा। लक्ष्मीच्छाया, लक्ष्मी छाया॥

इति हल्सन्धिः।

अथ विसर्गसन्धिः

**विसर्जनीयस्य सः॥ लसक_१०३ = पा_८,३.३४॥**
खरि। विष्णुस्त्राता॥

**वा शरि॥ लसक_१०४ = पा_८,३.३६॥**
शरि विसर्गस्य विसर्गो वा। हरिः शेते, हरिश्शेते॥

**समजुषो रुः॥ लसक_१०५ = पा_८,२.६६॥**
पदान्तस्य सस्य सजुषश्च रुः स्यात्॥

**अतो रोरप्लुतादप्लुतादप्लुते॥ लसक_१०६ = पा_६,१.११३॥**
अप्लुतादतः परस्य रोरुः स्यादप्लुते ऽति। शिवोऽर्च्यः॥

**हशि च॥ लसक_१०७ = पा_६,१.११४॥**
तथा। शिवो वन्द्यः॥

**भो भगो अघो अपूर्वस्य यो ऽशि॥ लसक_१०८ = पा_८,३.१७॥**
एतत्पूर्वस्य रोर्यादेशो ऽशि। देवा इह, देवायिह। भोस् भगोस् अघोस् इति सान्ता निपाताः। तेषां रोर्यत्वे कृते॥

**हलि सर्वेषाम्॥ लसक_१०९ = पा_८,३.२२॥**
भोभगोअघोअपूर्वस्य यस्य लोपः स्याद्धलि। भो देवाः। भगो नमस्ते। अघो याहि॥

**रो ऽसुपि॥ लसक_११० = पा_८,२.६९॥**
अह्नो रेफादेशो न तु सुपि। अहरहः। अहर्गणः॥

**रो रि॥ लसक_१११ = पा_८,३.१४॥**
रेफस्य रेफे परे लोपः॥

**ढ्रलोपे पूर्वस्य दीर्घो ऽणः॥ लसक_११२ = पा_६,३.१११॥**
ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः। पुना रमते। हरी रम्यः। शम्भू राजते। अणः किम्? तृढः। वृढः। मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रोरीति लोपे च प्राप्ते॥

**विप्रतिषेधे परं कार्यम्॥ लसक_११३ = पा_१,४.२॥**
तुल्यबलविरोधे परं कार्यं स्यात्। इति लोपे प्राप्ते। पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव। मनोरथः॥

**एतत्तदोः सुलोपो ऽकोरनञ्समासे हलि॥ लसक_११४ = पा_६,१.१३२॥**
अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि न तु नञ्समासे। एष विष्णुः। स शम्भुः। अकोः किम्? एषको रुद्रः। अनञ्समासे किम्? असः शिवः। हलि किम्? एषो ऽत्र॥

**सो ऽचि लोपे चेत्पादपूरणम्॥ लसक_११५ = पा_६,१.१३४॥**
स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्य्येत। सेमामविड्ढि प्रभृतिम्। सैष दाशरथी रामः॥

इति विसर्गसन्धिः॥

अथ षड्लिङ्गेषु अजन्तपुंल्लिङ्गाः

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम्॥ लसक_११६ = पा_१,२.४५॥**
धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात्॥

**कृत्तद्धितसमासाश्च॥ लसक_११७ = पा_१,२.४६॥**
कृत्तद्धितान्तौ समासाश्च तथा स्युः॥

**स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् लसक_११८ = पा_४,१.२॥**
सु औ जस् इति प्रथमा। अम् औट् शस् इति द्वितीया। टा भ्याम् भिस् इति तृतीया। ङे भ्याम् भ्यस् इति चतुर्थी। ङसि भ्याम् भ्यस् इति पञ्चमी। ङस् ओस् आम् इति षष्ठी। ङि ओस् सुप् इति सप्तमी॥

**ङ्याप्प्रातिपदिकात्॥ लसक_११९ = पा_४,१.१॥**

**प्रत्ययः॥ लसक_१२० = पा_३,१.१॥**

**परश्च॥ लसक_१२१ = पा_३,१.२॥**
इत्यधिकृत्य। ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः॥

**सुपः॥ लसक_१२२ = पा_१,४.१०३॥**
सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः॥

**द्व्येकयोर्द्विवचनैकवचने॥ लसक_१२३ = पा_१,४.२२॥**
द्वित्वैकत्वयोरेते स्तः॥

**विरामो ऽवसानम्॥ लसक_१२४ = पा_१,४.११०॥**
वर्णानामभावो ऽवसानसंज्ञः स्यात्। रुत्वविसर्गौ। **रामः**॥

**सरूपाणामेकशेष एकविभक्तौ॥ लसक_१२५ = पा_१,२.६४॥**
एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते॥

**प्रथमयोः पूर्वसवर्णः॥ लसक_१२६ = पा_६,१.१०२॥**
अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते॥

**नादिचि॥ लसक_१२७ = पा_६,१.१०४॥**
आदिचि न पूर्वसवर्णदीर्घः। वृद्धिरेचि। रामौ॥

**बहुषु बहुवचनम्॥ लसक_१२८ = पा_१,४.२१॥**
बहुत्वविवक्षायां बहुवचनं स्यात्॥

**चुटू॥ लसक_१२९ = पा_१,३.७॥**
प्रत्ययाद्यौ चुटू इतौ स्तः॥

**विभक्तिश्च॥ लसक_१३० = पा_१,४.१०४॥**
सुप्तिङौ विभक्तिसंज्ञौ स्तः॥

**न विभक्तौ तुस्माः॥ लसक_१३१ = पा_१,३.४॥**
विभक्तिस्थास्तवर्गसमा नेतः। इति सस्य नेत्त्वम्। रामाः॥

**एकवचनं सम्बुद्धिः॥ लसक_१३२ = पा_२,३.४९॥**
सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात्॥

**यस्मात्प्रत्ययविधिस्तदादि प्रत्यये ऽङ्गम्॥ लसक_१३३ = पा_१,४.१३॥**
यः प्रत्ययो यस्मात् क्रियते तदादिशब्दस्वरूपं तस्मिन्नङ्गं स्यात्॥

**एङ्ह्रस्वात्सम्बुद्धेः॥ लसक_१३४ = पा_६,१.६९॥**
एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत्। हे राम। हे रामौ। हे रामाः॥

**अमि पूर्वः॥ लसक_१३५ = पा_६,१.१०७॥**
अको ऽम्यचि पूर्वरूपमेकादेशः। रामम्। रामौ॥

**लशक्वतद्धिते॥ लसक_१३६ = पा_१,३.८॥**
तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः॥

**तस्माच्छसो नः पुंसि॥ लसक_१३७ = पा_६,१.१०३॥**
पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि॥

**अट्कुप्वाङ्नुम्व्यवाये ऽपि॥ लसक_१३८ = पा_८,४.२॥**
अट् कवर्गः पवर्गः आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधाने ऽपि रषाभ्यां परस्य नस्य णः समानपदे। इति प्राप्ते॥

**पदान्तस्य॥ लसक_१३९ = पा_८,४.३७॥**
नस्य णो न। रामान्॥

**टाङसिङसामिनात्स्याः॥ लसक_१४० = पा_७,१.१२॥**
अदन्ताट्टादीनामिनादयः स्युः। णत्वम्। रामेण॥

**सुपि च॥ लसक_१४१ = पा_७,३.१०२॥**
यञादौ सुपि अतो ऽङ्गस्य दीर्घः। रामाभ्याम्॥

**अतो भिस ऐस्॥ लसक_१४२ = पा_७,१.९॥**
अनेकाल्शित्सर्वस्य। रामैः॥

**ङेर्यः॥ लसक_१४३ = पा_७,१.१३॥**
अतो ऽङ्गात्परस्य ङेर्यादेशः॥

**स्थानिवदादेशो ऽनल्विधौ॥ लसक_१४४ = पा_१,१.५६॥**
आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ। इति स्थानिवत्त्वात् सुपि चेति दीर्घः। रामाय। रामाभ्याम्॥

**बहुवचने झल्येत्॥ लसक_१४५ = पा_७,३.१०३॥**
झलादौ बहुवचने सुप्यतो ऽङ्गस्यैकारः। रामेभ्यः। सुपि किम्? पचध्वम्॥

**वावसाने॥ लसक_१४६ = पा_८,४.५६॥**
अवसाने झलां चरो वा। रामात्, रामाद्। रामाभ्याम्। रामेभ्यः। रामस्य॥

**ओसि च॥ लसक_१४७ = पा_७,३.१०४॥**
अतो ऽङ्गस्यैकारः। रामयोः॥

**ह्रस्वनद्यापो नुट्॥ लसक_१४८ = पा_७,१.५४॥**
ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः॥

**नामि॥ लसक_१४९ = पा_६,४.३॥**
अजन्ताङ्गस्य दीर्घः। रामाणाम्। रामे। रामयोः। सुपि - एत्त्वे कृते॥

**आदेशप्रत्यययोः॥ लसक_१५० = पा_८,३.५९॥**
इण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य यः सस्तस्य मूर्धन्यादेशः। ईषद्विवृतस्य सस्य तादृश एव षः। रामेषु। एवं कृष्णादयो ऽप्यदन्ताः॥

**सर्वादीनि सर्वनामानि॥ लसक_१५१ = पा_१,१.२७॥**
सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम। पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्। स्वमज्ञातिधनाख्यायाम्। अन्तरं बहिर्योगोपसंव्यानयोः। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम्॥

**जसः शी॥ लसक_१५२ = पा_७,१.१७॥**
अदन्तात्सर्वनाम्नो जसः शी स्यात्। अनेकाल्त्वात्सर्वादेशः। सर्वे॥

**सर्वनाम्नः स्मै॥ लसक_१५३ = पा_७,१.१४॥**
अतः सर्वनाम्नो ङेः स्मै। सर्वस्मै॥

**ङसिङ्योः स्मात्स्मिनौ॥ लसक_१५४ = पा_७,१.१५॥**
अतः सर्वनाम्न एतयोरेतौ स्तः। सर्वस्मात्॥

**आमि सर्वनाम्नः सुट्॥ लसक_१५५ = पा_७,१.५२॥**
अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः। एत्वषत्वे। सर्वेषाम्। सर्वस्मिन्। शेषं रामवत्। एवं विश्वादयो ऽप्यदन्ताः॥ **उभ**शब्दो नित्यं द्विवचनान्तः। उभौ २। उभाभ्याम् ३। उभयोः २। तस्येह पाठो ऽकजर्थः। **उभय**शब्दस्य द्विवचनं नास्ति। उभयः। उभये। उभयम्। उभयान्। उभयेन। उभयैः। उभयस्मै। उभयेभ्यः। उभयस्मात्। उभयेभ्यः। उभयस्य। उभयेषाम्। उभयस्मिन्। उभयेषु॥ डतरडतमौ प्रत्ययौ, प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता ग्राह्याः॥ नेम इत्यर्धे॥ समः सर्वपर्याय स्तुल्यपर्यायस्तु न, यथासंख्यमनुदेशः समानामिति ज्ञापकात्॥

**पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्॥ लसक_१५६ = पा_१,१.३४॥**
एतेषां व्यवस्थायामसंज्ञायां च सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात्। पूर्वे, पूर्वाः। असंज्ञायां किम् ? उत्तराः कुरवः। स्वाभिधेयापेक्षावधिनियमो व्यवस्था। व्यवस्थायां किम् ? दक्षिणा गाथकाः, कुशला इत्यर्थः॥

**स्वमज्ञातिधनाख्यायाम्॥ लसक_१५७ = पा_१,१.३५॥**
ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा। स्वे, स्वाः आत्मीयाः, आत्मान इति वा। ज्ञातिधनवाचिनस्तु, स्वाः ज्ञातयोऽर्था वा॥

**अन्तरं बहिर्योगोपसंव्यानयोः॥ लसक_१५८ = पा_१,४.३६॥**
बाह्ये परिधानीये चार्थे ऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा। अन्तरे, अन्तरा वा गृहाः बाह्या इत्यर्थः। अन्तरे, अन्तरा वा शाटकाः परिधानीया इत्यर्थः॥

**पूर्वादिभ्यो नवभ्यो वा॥ लसक_१५९ = पा_७,१.१६॥**
एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः। पूर्वस्मात्, पूर्वात्। पूर्वस्मिन्, पूर्वे। एवं परादीनाम्। शेषं सर्ववत्॥

**प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च॥ लसक_१६० = पा_१,१.३३॥**
एते जसि उक्तसंज्ञा वा स्युः। प्रथमे, प्रथमाः॥ तयः प्रत्ययः। द्वितये, द्वितयाः। शेषं रामवत्॥ नेमे, नेमाः। शेषं सर्ववत्॥ (*तीयस्य ङित्सु वा*)। द्वितीयस्मै, द्वितीयायेत्यादि। एवं तृतीयः॥ **निर्जरः**॥

**जराया जरसन्यतरस्याम्॥ लसक_१६१ = पा_७,२.१०१॥**

अजादौ विभक्तौ। (प.) पदाङ्गाधिकारे तस्य च तदन्तस्य च। (प.) निर्दिश्यमानस्यादेशा भवन्ति। (प.) एकदेशविकृतमनन्यवत्, इति जरशब्दस्य जरस्। निर्जरसौ। निर्जरस इत्यादि। पक्षे हलादौ च रामवत्॥ **विश्वपाः**॥

**दीर्घाज्जसि च॥ लसक_१६२ = पा_६,१.१०५॥**
दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात्। विश्वपौ। विश्वपाः। हे विश्वपाः। विश्वपाम्। विश्वपौ॥

**सुडनपुंसकस्य॥ लसक_१६३ = पा_१,१.४३॥**
स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य॥

**स्वादिष्वसर्वनामस्थाने॥ लसक_१६४ = पा_१,४.१७॥**
कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदं स्यात्॥

**यचि भम्॥ लसक_१६५ = पा_१,४.१८॥**
यादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात्॥

**आकडारादेका संज्ञा॥ लसक_१६६ = पा_१,४.१॥**
इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया। या परानवकाशा च॥

**आतो धातोः॥ लसक_१६७ = पा_६,४.१४०॥**
आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः। अलो ऽन्त्यस्य। विश्वपः। विश्वपा। विश्वपाभ्यामित्यादि। एवं शङ्खध्मादयः। धातोः किम्? हाहान्॥ **हरिः**। हरी॥

**जसि च॥ लसक_१६८ = पा_७,३.१०९॥**
ह्रस्वान्तस्याङ्गस्य गुणः। हरयः॥

**ह्रस्वस्य गुणः॥ लसक_१६९ = पा_७,३.१०८॥**
सम्बुद्धौ। हे हरे। हरिम्। हरी। हरीन्॥

**शेषो घ्यसखि॥ लसक_१७० = पा_१,४.७॥**
शेष इति स्पष्टार्थम्। ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञम्॥

**आङो नास्त्रियाम्॥ लसक_१७१ = पा_७,३.१२०॥**
घेः परस्याङो ना स्यादस्त्रियाम्। आङिति टासंज्ञा। हरिणा। हरिभ्याम्। हरिभिः॥

**घेर्ङिति॥ लसक_१७२ = पा_७,३.१११॥**
घिसंज्ञस्य ङिति सुपि गुणः। हरये। हरिभ्याम्। हरिभ्यः॥

**ङसिङसोश्च॥ लसक_१७३ = पा_६,१.११०॥**
एङो ङसिङसोरति पूर्वरूपमेकादेशः। हरेः २। हर्योः २। हरीणाम्॥

**अच्च घेः॥ लसक_१७४ = पा_७,३.११९॥**
इदुद्भ्यामुत्तरस्य ङेरौत्, घेरच्च। हरौ। हरिषु। एवं कव्यादयः॥

**अनङ् सौ॥ लसक_१७५ = पा_७,१.९३॥**
सख्युरङ्गस्यानङादेशो ऽसम्बुद्धौ सौ॥

**अलो ऽन्त्यात्पूर्व उपधा॥ लसक_१७६ = पा_१,१.६५॥**
अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः॥

**सर्वनामस्थाने चासम्बुद्धौ॥ लसक_१७७ = पा_६,४.८॥**
नान्तस्योपधाया दीर्घो ऽसम्बुद्धौ सर्वनामस्थाने॥

**अपृक्त एकाल् प्रत्ययः॥ लसक_१७८ = पा_१,२.४१॥**
एकाल् प्रत्ययो यः सो ऽपृक्तसंज्ञः स्यात्॥

**हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्॥ लसक_१७९ = पा_६,१.६८॥**
हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते॥

**नलोपः प्रातिपदिकान्तस्य॥ लसक_१८० = पा_८,२.७॥**
प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः। सखा॥

**सख्युरसंबुद्धौ॥ लसक_१८१ = पा_७,१.९२॥**
सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात्॥

**अचो ञ्णिति॥ लसक_१८२ = पा_७,२.११५॥**
अजन्ताङ्गस्य वृद्धिर्ञिति णिति च परे। सखायौ। सखायः। हे सखे। सखायम्। सखायौ। सखीन्। सख्या। सख्ये॥

**ख्यत्यात्परस्य॥ लसक_१८३ = पा_६,१.११२॥**
खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः। सख्युः॥

**औत्॥ लसक_१८४ = पा_७,३.११८॥**
इतः परस्य ङेरौत्। सख्यौ। शेषं हरिवत्॥

**पतिः समास एव॥ लसक_१८५ = पा_१,४.८॥**
घिसंज्ञः। पत्युः २। पत्यौ। शेषं हरिवत्। समासे तु भूपतये। **कति**शब्दो नित्यं बहुवचनान्तः॥

**बहुगणवतुडति संख्या॥ लसक_१८६ = पा_१,१.२३॥**

**डति च॥ लसक_१८७ = पा_१,१.२५॥**
डत्यन्ता संख्या षट्संज्ञा स्यात्॥

**षड्भ्यो लुक्॥ लसक_१८८ = पा_७,१.२२॥**
जश्शसोः॥

**प्रत्ययस्य लुक्श्लुलुपः॥ लसक_१८९ = पा_१,१.६१॥**
लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात्॥

**प्रत्ययलोपे प्रत्ययलक्षणम्॥ लसक_१९० = पा_१,१.६२॥**
प्रत्यये लुप्ते तदाश्रितं कार्यं स्यात्। इति जसि चेति गुणे प्राप्ते॥

**न लुमताङ्गस्य॥ लसक_१९१ = पा_१,१.६३॥**
लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात्। कति २। कतिभिः। कतिभ्यः २। कतीनाम्। कतिषु। युष्मदस्मत्षट्संज्ञकास्त्रिषु सरूपाः॥
**त्रि**शब्दो नित्यं बहुवचनान्तः। त्रयः। त्रीन्। त्रिभिः। त्रिभ्यः २॥

**त्रेस्त्रयः॥ लसक_१९२ = पा_७,१.५३॥**
त्रिशब्दस्य त्रयादेशः स्यादामि। त्रयाणाम्। त्रिषु। गौणत्वे ऽपि प्रियत्रयाणाम्॥

**त्यदादीनामः॥ लसक_१९३ = पा_७,२.१०२॥**

एषामकारो विभक्तौ। (*द्विपर्य्यन्तानामेवेष्टिः*)। द्वौ २। द्वाभ्याम् ३। द्वयोः २॥ पाति लोकमिति **पपीः** सूर्यः॥

**दीर्घाज्जसि च॥ लसक_१९४ = पा_६,१.१०५॥**

पप्यौ २। पप्यः। हे पपीः। पपीम्। पपीन्। पप्या। पपीभ्याम् ३। पपीभिः। पप्ये। पपीभ्यः २। पप्यः २। पप्योः। दीर्घत्वान्न नुट्, पप्याम्। ङौ तु सवर्णदीर्घः, पपी। पप्योः। पपीषु। एवं वातप्रम्यादयः॥ बह्व्यः श्रेयस्यो यस्य स **बहुश्रेयसी**॥

**यू स्त्र्याख्यौ नदी॥ लसक_१९५ = पा_१,४.३॥**

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः। (*प्रथमलिङ्गग्रहणं च*)। पूर्वं स्त्र्याख्यस्योपसर्जनत्वे ऽपि नदीत्वं वक्तव्यमित्यर्थः॥

**अम्बार्थनद्योर्ह्रस्वः॥ लसक_१९६ = पा_७,३.१०७॥**

सम्बुद्धौ। हे बहुश्रेयसि॥

**आण्नद्याः॥ लसक_१९७ = पा_७,३.११२॥**

नद्यन्तात्परेषां ङितामाडागमः॥

**आटश्च॥ लसक_१९८ = पा_६,१.९०॥**

आटो ऽचि परे वृद्धिरेकादेशः। बहुश्रेयस्यै। बहुश्रेयस्याः। बहुश्रेयसीनाम्॥

**ङेराम्नद्याम्नीभ्यः॥ लसक_१९९ = पा_७,३.११७॥**

नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेराम्। बहुश्रेयस्याम्। शेषं पपीवत्॥ अङ्यन्तत्वान्न सुलोपः। **अतिलक्ष्मीः**। शेषं बहुश्रेयसीवत्॥ **प्रधीः**॥

**अचि श्नुधातुभ्रुवां य्वोरियङुवङौ॥ लसक_२०० = पा_६,४.७७॥**

श्नु प्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्य चेयङुवङौ स्तो ऽजादौ प्रत्यये परे। इति प्राप्ते॥

**एरनेकाचो ऽसंयोगपूर्वस्य॥ लसक_२०१ = पा_६,४.८२॥**

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचो ऽङ्गस्य यणजादौ प्रत्यये। प्रध्यौ। प्रध्यः। प्रध्यम्। प्रध्यौ। प्रध्यः। प्रध्यि। शेषं पपीवत्। एवं **ग्रामणीः**। ङौ तु ग्रामण्याम्॥ अनेकाचः किम्? **नीः**। नियौ। नियः। अमि शसि च परत्वादियङ्, नियम्। ङेराम् नियाम्॥ असंयोगपूर्वस्य किम्? सुश्रियौ। यवक्रियौ॥

**गतिश्च॥ लसक_२०२ = पा_१,४.६०॥**

प्रादयः क्रियायोगे गतिसंज्ञाः स्युः। (*गतिकारकेतरपूर्वपदस्य यण् नेष्यते*)। शुद्धधियौ॥

**न भूसुधियोः॥ लसक_२०३ = पा_६,४.८५॥**

एतयोरचि सुपि यण्न। सुधियौ। सुधिय इत्यादि॥ सुखमिच्छतीति **सुखीः**। **सुतीः**। सुख्यौ। सुत्यौ। सुख्युः। सुत्युः। शेषं प्रधीवत्। शम्भुर्हरिवत्। एवं भान्वादयः॥

**तृज्वत्क्रोष्टुः॥ लसक_२०४ = पा_६,१.९५॥**

असम्बुद्धौ सर्वनामस्थाने परे। क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः॥

**ऋतो ङिसर्वनामस्थानयोः॥ लसक_२०५ = पा_७,१.११०॥**

ऋतो ऽङ्गस्य गुणो ङौ सर्वनामस्थाने च। इति प्राप्ते -- .

**ऋदुशनस्पुरुदंसो ऽनेहसां च॥ लसक_२०६ = पा_७,१.९४॥**

ऋदन्तानाम् उशनसादीनाम् च अनङ् स्यात् असंबुद्धौ सौ॥

**अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम्॥ लसक_२०७ = पा_६,४.११॥**

अबादीनाम् उपधाया दीर्घः असंबुद्धौ सर्वनामस्थाने। **क्रोष्टा**। क्रोष्टारौ। क्रोष्टारः। क्रोष्टून्॥

**विभाषा तृतीयादिष्वचि॥ लसक_२०८ = पा_७,१.९७॥**
अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा। क्रोष्ट्रे॥

**ऋत उत्॥ लसक_२०९ = पा_६,१.१११॥**
ऋतो ङसिङसोरति उदेकादेशः। रपरः॥

**रात्सस्य॥ लसक_२१० = पा_८,२.२४॥**
रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य। रस्य विसर्गः। क्रोष्टुः २। क्रोष्ट्रोः २। (*नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन*)। क्रोष्टूनाम्। क्रोष्टरि। पक्षे हलादौ च शम्भुवत्॥ **हूहूः**। हूहवौ। हूहवः। हूहूम् इत्यादि॥ **अतिचमू**शब्दे तु नदीकार्य्यं विशेषः। हे अतिचमु। अतिचम्वै। अतिचम्वाः। अतिचमूनाम्॥ **खलपूः**॥

**ओः सुपि॥ लसक_२११ = पा_६,४.८३॥**
धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचो ऽङ्गस्य यण् स्यादचि सुपि। खलप्वौ। खलप्वः। एवं सुल्वादयः॥ **स्वभूः**। स्वभुवौ। स्वभुवः॥ **वर्षाभूः**॥

**वर्षाभ्वश्च॥ लसक_२१२ = पा_६,४.८४॥**
अस्य यण् स्यादचि सुपि। वर्षाभ्वावित्यादि॥ **दृन्भूः**। (*दृन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः*)। दृन्भ्वौ। एवं करभूः॥ **धाता**। हे धातः। धातारौ। धातारः। (*ऋवर्णान्नस्य णत्वं वाच्यम्*)। धातृणाम्। एवं नप्त्रादयः॥ नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्। तेनेह न। **पिता**। पितरौ। पितरः। पितरम्। शेषं धातृवत्। एवं जामात्रादयः॥ **ना**। नरौ॥

**नृ च॥ लसक_२१३ = पा_६,४.६॥**
अस्य नामि वा धीर्घः। नृणाम्। नृणाम्॥

**गोतो णित्॥ लसक_२१४ = पा_७,१.९०॥**
ओकाराद्विहितं सर्वनामस्थानं णिद्वत्। **गौः**। गावौ। गावः॥

**औतो ऽम्शसोः॥ लसक_२१५ = पा_६,१.९३॥**
ओतो ऽम्शसोरचि आकार एकादेशः। गाम्। गावौ। गाः। गवा। गवे। गोः। इत्यादि॥

**रायो हलि॥ लसक_२१६ = पा_७,२.८५॥**
अस्याकारादेशो हलि विभक्तौ। **राः**। रायौ। रायः। राम्यामित्यादि॥ **ग्लौः**। ग्लावौ। ग्लावः। ग्लौभ्यामित्यादि॥

इत्यजन्तपुंल्लिङ्गाः।

अथाजन्तस्त्रीलिङ्गाः

**रमा**।

**औङ आपः॥ लसक_२१७ = पा_७,१.१८॥**
आबन्तादङ्गात्परस्यऔङः शी स्यात्। औङित्यौकारविभक्तेः संज्ञा। रमे। रमाः॥

**सम्बुद्धौ च॥ लसक_२१८ = पा_७,३.१०६॥**
आप एकारः स्यात्सम्बुद्धौ। एङ्ह्रस्वादिति संबुद्धिलोपः। हे रमे। हे रमे। हे रमाः। रमाम्। रमे। रमाः॥

**आङि चापः॥ लसक_२१९ = पा_७,३.१०५॥**
आङि ओसि चाप एकारः। रमया। रमाभ्याम्। रमाभिः॥

**याडापः॥ लसक_२२० = पा_७,३.११३॥**
आपो ङितो याट्। वृद्धिः। रमायै। रमाभ्याम्। रमाभ्यः। रमायाः। रमयोः। रमाणाम्। रमायाम्। रमासु। एवं दुर्गाम्बिकादयः॥

**सर्वनाम्नः स्याड्ढ्रस्वश्च॥ लसक_२२१ = पा_७,३.११४॥**
आबन्तात्सर्वनाम्नो ङितः स्याट् स्यादापश्च ह्रस्वः। सर्वस्यै। सर्वस्याः। सर्वासाम्। सर्वस्याम्। शेषं रमावत्॥ एवं विश्वादय आबन्ताः॥

**विभाषा दिक्समासे बहुव्रीहौ॥ लसक_२२२ = पा_१,१.२८॥**
सर्वनामता वा। उत्तरपूर्वस्यै, उत्तरपूर्वायै। तीयस्येति वा सर्वनामसंज्ञा। द्वितीयस्यै, द्वितीयायै॥ एवं तृतीया॥ अम्बार्थेति ह्रस्वः। हे अम्ब। हे अक्क। हे अल्ल॥ जरा। जरसौ इत्यादि। पक्षे रमावत्॥ गोपाः, विश्वपावत्॥ मतीः। मत्या॥

**ङिति ह्रस्वश्च॥ लसक_२२३ = पा_१,४.६॥**
इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ, ह्रस्वौ चेवर्णोवर्णौ, स्त्रियां वा नदीसंज्ञौ स्तो ङिति। मत्यै, मतये। मत्याः २। मतेः २॥

**इदुद्भ्याम्॥ लसक_२२४ = पा_७,३.११७॥**
इदुद्भ्यां नदीसंज्ञकाभ्यां परस्य ङेराम्। मत्याम्, मतौ। शेषं हरिवत्॥ एवं बुद्ध्यादयः॥

**त्रिचतुरोः स्त्रियां तिसृचतसृ॥ लसक_२२५ = पा_७,२.९९॥**
स्त्रीलिङ्गयोरेतौ स्तो विभक्तौ॥

**अचि र ऋतः॥ लसक_२२६ = पा_७,२.१००॥**
तिसृ चतसृ एतयोरृकारस्य रेफादेशः स्यादचि। गुणदीर्घोत्वानामपवादः। **तिस्रः**। तिसृभ्यः। तिसृभ्यः। आमि नुट्॥

**न तिसृचतसृ॥ लसक_२२७ = पा_६,४.४॥**
एतयोर्नामि दीर्घो न। तिसृणाम्। तिसृषु॥ **द्वे**। द्वे। द्वाभ्याम्। द्वाभ्याम्। द्वाभ्याम्। द्वयोः। द्वयोः॥ **गौरी**। गौर्य्यौ। गौर्य्यः। हे गौरि। गौर्य्यै इत्यादि। एवं नद्यादयः॥ **लक्ष्मीः**। शेषं गौरीवत्॥ एवं तरीतन्त्र्यादयः॥ **स्त्री**। हे स्त्रि॥

**स्त्रियाः॥ लसक_२२८ = पा_६,४.७९॥**
अस्येयङ् स्यादजादौ प्रत्यये परे। स्त्रियौ। स्त्रियः॥

**वाम्शसोः॥ लसक_२२९ = पा_६,४.८०॥**
अमि शसि च स्त्रिया इयङ् वा स्यात्। स्त्रियम्, स्त्रीम्। स्त्रियः, स्त्रीः। स्त्रिया। स्त्रियै। स्त्रियाः। परत्वान्नुट्। स्त्रीणाम्। स्त्रीषु॥ **श्रीः**। श्रियौ। श्रियाः॥

**नेयङुवङ्स्थानावस्त्री॥ लसक_२३० = पा_१,४.४॥**
इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री। हे श्रीः। श्रियै, श्रिये। श्रियाः, श्रियः॥

**वामि॥ लसक_२३१ = पा_१,४.५॥**

इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री। श्रीणाम्, श्रियाम्। श्रियि, श्रियाम्॥ धेनुर्मतिवत्॥

**स्त्रियां च॥ लसक_२३२ = पा_७,१.९६॥**

स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते॥

**ऋन्नेभ्यो ङीप्॥ लसक_२३३ = पा_४,१.५॥**

ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप्। क्रोष्ट्री गौरीवत्॥ भ्रूः श्रीवत्॥ स्वयम्भूः पुंवत्॥

**न षट्स्वस्रादिभ्यः॥ लसक_२३४ = पा_४,१.१०॥**

ङीप्टापौ न स्तः॥

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा।

याता मातेति सप्तैते स्वस्रादय उदाहृताः॥

**स्वसा**। स्वसारौ॥ माता पितृवत्। शसि मातॄः॥ द्यौर्गोवत्॥ राः पुंवत्॥ नौर्ग्लौवत्॥

इत्यजन्तस्त्रीलिङ्गाः

अथाजन्तनपुंसकलिङ्गाः

**अतो ऽम्॥ लसक_२३५ = पा_७,१.२४॥**
अतो ऽङ्गात् क्लीबात्स्वमोरम्। अमि पूर्वः। **ज्ञानम्**। एङ्ह्रस्वादिति हल्लोपः। हे ज्ञान//

**नपुंसकाच्च॥ लसक_२३६ = पा_७,१.१९॥**
क्लीबादौङः शी स्यात्। भसंज्ञायाम्॥

**यस्येति च॥ लसक_२३७ = पा_६,४.१४८॥**
कडारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः। इत्यल्लोपे प्राप्ते (*औङः श्यां प्रतिषेधो वाच्यः*)। ज्ञाने॥

**जश्शसोः शिः॥ लसक_२३८ = पा_७,१.२०॥**
क्लीबादनयोः शिः स्यात्॥

**शि सर्वनामस्थानम्॥ लसक_२३९ = पा_१,१.४२॥**
शि इत्येतदुक्तसंज्ञं स्यात्॥

**नपुंसकस्य झलचः॥ लसक_२४० = पा_७,१.७२॥**
झलन्तस्याजन्तस्य च क्लीबस्य नुम् स्यात् सर्वनामस्थाने॥

**मिदचो ऽन्त्यात्परः॥ लसक_२४१ = पा_१,१.४७॥**
अचां मध्ये यो ऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात्। उपधादीर्घः। ज्ञानानि। पुनस्तद्वत्। शेषं पुंवत्॥ एवं धन वन फलादयः॥

**अद्ड्डतरादिभ्यः पञ्चभ्यः॥ लसक_२४२ = पा_७,१.२५॥**
एभ्यः क्लीबेभ्यः स्वमोः अद्डादेशः स्यात्॥

**टेः॥ लसक_२४३ = पा_६,४.१४३॥**
डिति भस्य टेर्लोपः। **कतरत्**, कतरद्। कतरे। कतराणि। हे कतरत्। शेषं पुंवत्॥ एवं कतमत्। इतरत्। अन्यत्। अन्यतरत्। अन्यतमस्य त्वन्यतममित्येव। (*एकतरात्प्रतिषेधो वक्तव्यः*)/ एकतरम्॥

**ह्रस्वो नपुंसके प्रातिपदिकस्य॥ लसक_२४४ = पा_१,३.४७॥**
अजन्तस्येत्येव। श्रीपं ज्ञानवत्॥

**स्वमोर्नपुंसकात्॥ लसक_२४५ = पा_७,१.२३॥**
लुक् स्यात्। वारि॥

**इको ऽचि विभक्तौ॥ लसक_२४६ = पा_७,१.७३॥**
इगन्तस्य क्लीबस्य नुमचि विभक्तौ। वारिणी। वारीणि। न लुमतेत्यस्यानित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः। हे वारे, हे वारि। घेर्ङितीति गुणे प्राप्ते (*वृद्ध्यौत्त्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन*)। वारिणे। वारिणः। वारिणोः। नुमचिरेति नुट्। वारीणाम्। वारिणि। हलादौ हरिवत्॥

**अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः॥ लसक_२४७ = पा_७,१.७५॥**
एषामनङ् स्याट्टादावचि॥

**अल्लोपो ऽनः॥ लसक_२४८ = पा_६,४.१३४॥**
अङ्गावयवो ऽसर्वनामस्थानयजादिस्वादिपरो यो ऽन् तस्याकारस्य लोपः। दध्ना। दध्ने। दध्नः। दध्नः। दध्नोः। दध्नोः॥

**विभाषा ङिश्योः॥ लसक_२४९ = पा_६,४.१३६॥**
अङ्गावयवो ऽसर्वनामस्थानयजादिस्वादिपरो यो ऽन् तस्याकारस्य लोपो वा स्याङत् ङिश्योः परयोः। दध्नि, दधनि। शेषं वारिवत्॥

एवमस्थिसक्थ्यक्षि॥ **सुधि**। सुधिनी। सुधीनि। हे सुधे, हे सुधि॥

**तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य॥ लसक_२५० = पा_७,१.७४॥**
प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा टादावचि। सुधिया, सुधिनेत्यादि॥ **मधु**। मधुनी। मधूनि। हे मधो, हे मधु॥ **सुलु**। सुलुनी। सुलूनि। सुलुनेत्यादि॥ **धातृ**। धातृणी। धातॄणि। हे धातः, हे धातृ। धातॄणाम्॥ एवं ज्ञात्रादयः॥

**एच इग्घ्रस्वादेशे॥ लसक_२५१ = पा_१,१.४८॥**
आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात्। **प्रद्यु**। प्रद्युनी। प्रद्यूनि। प्रद्युनेत्यादि॥ **प्ररि**। प्ररिणी। प्ररीणि। प्ररिणा। एकदेशविकृतमनन्यवत्। प्राभ्याम्। प्ररीणाम्॥ **सुनु**। सुनुनी। सुनूनि। सुनुनेत्यादि॥

इत्यजन्तनपुंसकलिङ्गाः।

अथ हलन्त पुंल्लिङ्गाः

**हो ढः॥ लसक_२५२ = पा_८,२.३१॥**
हस्य ढः स्याज्झलि पदान्ते च। **लिट्**, लिड्। लिहौ। लिहः। लिड्भ्याम्। लिट्त्सु, लिट्सु॥

**दादेर्धातोर्घः॥ लसक_२५३ = पा_८,२.३२॥**
झलि पदान्ते चोपदेशे दादेर्धातेर्हस्य घः॥

**एकाचो बशो भष् झषन्तस्य स्ध्वोः॥ लसक_२५४ = पा_८,२.३७॥**
धात्ववयवस्यैकाचो झषन्तस्य बशो भष् से ध्वे पदान्ते च। **धुक्**, धुग्। दुहौ। दुहः। धुग्भ्याम्। धुक्षु॥

**वा द्रुहमुहष्णुहष्णिहाम्॥ लसक_२५५ = पा_८,२.३३॥**
एषां हस्य वा घो झलि पदान्ते च। **ध्रुक्**, ध्रुग्, ध्रुट्, ध्रुड्। द्रुहौ। द्रुहः। ध्रुग्भ्याम्, ध्रुड्भ्याम्। ध्रुक्षु, ध्रुट्त्सु, ध्रुट्सु॥ एवं मुक्, मुग् इत्यादि॥

**धात्वादेः षः सः॥ लसक_२५६ = पा_६,१.६४॥**
**स्नुक्**, स्नुग्, स्नुट्, स्नुड्। एवं स्निक्, स्निग्, स्निट्, स्निड्॥ **विश्ववाट्**, विश्ववाड्। विश्ववाहौ। विश्ववाहः। विश्ववाहम्। विश्ववाहौ॥

**इग्यणः संप्रसारणम्॥ लसक_२५७ = पा_१,१.४५॥**
यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात्॥

**वाह ऊठ्॥ लसक_२५८ = पा_६,४.१३२॥**
भस्य वाहः संप्रसारणमूठ्॥

**संप्रसारणाच्च॥ लसक_२५९ = पा_६,१.१०८॥**
संप्रसारणादचि पूर्वरूपमेकादेशः। एत्येधत्यूठ्स्विति वृद्धिः। विश्वौहः, इत्यादि॥

**चतुरनडुहोरामुदात्तः॥ लसक_२६० = पा_७,१.९८॥**
अनयोराम् स्यात्सर्वनामस्थाने परे॥

**सावनडुहः॥ लसक_२६१ = पा_७,१.८२॥**
अस्य नुम् स्यात् सौ परे। **अनड्वान्**॥

**अम् संबुद्धौ॥ लसक_२६२ = पा_७,१.९९॥**
हे अनड्वन्। हे अनड्वाहौ। हे अनड्वाहः। अनडुहः। अनडुहा॥

**वसुस्रंसुध्वंस्वनडुहां दः॥ लसक_२६३ = पा_८,२.७२॥**
सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते। अनडुद्भ्यामित्यादि॥ सान्तेति किम्? विद्वान्। पदान्ते किम्? स्रस्तम्। ध्वस्तम्॥

**सहेः साडः सः॥ लसक_२६४ = पा_८,३.५६॥**
साडरूपस्य सहेः सस्य मूर्धन्यादेशः। **तुराषाट्**, तुराषाड्। तुरासाहौ। तुरासाहः। तुराषाड्भ्यामित्यादि॥

**दिव औत्॥ लसक_२६५ = पा_७,१.८४॥**
दिविति प्रातिपदिकस्यौत्स्यात्सौ। **सुद्यौः**। सुदिवौ॥

**दिव उत्॥ लसक_२६६ = पा_६,१.१३१॥**
दिवो ऽन्तादेश उकारः स्यात् पदान्ते। सुद्युभ्यामित्यादि॥ **चत्वारः**। चतुरः। चतुर्भिः। चतुर्भ्यः॥

**षट्चतुर्भ्यश्च॥ लसक_२६७ = पा_७,१.५५॥**
एभ्य आमो नुडागमः॥

**रषाभ्यां नो णः समानपदे॥ लसक_२६८ = पा_८,४.१॥**

**अचो रहाभ्यां द्वे॥ लसक_२६९ = पा_८,४.४६॥**
अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। चतुर्ण्णाम्, चतुर्णाम्॥

**रोः सुपि॥ लसक_२७० = पा_८,३.१६॥**
रोरेव विसर्गः सुपि। षत्वम्। षस्य द्वित्वे प्राप्ते॥

**शरो ऽचि॥ लसक_२७१ = पा_८,४.४९॥**
अचि परे शरो न द्वे स्तः। चतुर्षु॥

**मो नो धातोः॥ लसक_२७२ = पा_८,२.६४॥**
धातोर्मस्य नः पदान्ते। प्रशान्॥

**किमः कः॥ लसक_२७३ = पा_७,२.१०३॥**
किमः कः स्याद्विभक्तौ। **कः**। कौ। के इत्यादि। शेषं सर्ववत्॥

**इदमो मः॥ लसक_२७४ = पा_७,२.१०८॥**
सौ। त्यदाद्यत्वापवादः॥

**इदो ऽय् पुंसि॥ लसक_२७५ = पा_७,२.१११॥**
इदम इदो ऽय् सौ पुंसि। **अयम्**। त्यदाद्यत्वे॥

**अतो गुणे॥ लसक_२७६ = पा_६,१.९७॥**
अपदान्तादतो गुणे पररूपमेकादेशः॥

**दश्च॥ लसक_२७७ = पा_७,२.१०९॥**
इदमो दस्य मः स्याद्विभक्तौ। इमौ। इमे। त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः॥

**अनाप्यकः॥ लसक_२७८ = पा_७,२.११२॥**
अककारस्येदम इदो ऽनापि विभक्तौ। आबिति प्रत्याहारः। अनेन॥

**हलि लोपः॥ लसक_२७९ = पा_७,२.११३॥**
अककारस्येदम इदो लोप आपि हलादौ। नानर्थके ऽलो ऽन्त्यविधिरनभ्यासविकारे॥

**आद्यन्तवदेकस्मिन्॥ लसक_२८० = पा_१,१.२१॥**
एकस्मिन्क्रियमाणं कार्यमादाविवान्त इव स्यात्। सुपि चेति दीर्घः। आभ्याम्॥

**नेदमदसोरकोः॥ लसक_२८१ = पा_७,१.११॥**
अककारयोरिदमदसोर्भिस ऐस् न। एभिः। अस्मै। एभ्यः। अस्मात्। अस्य। अनयोः। एषाम्। अस्मिन्। अनयोः। एषु॥

**द्वितीयाटौस्स्वेनः॥ लसक_२८२ = पा_२,४.३४॥**
इदमेतदोरन्वादेशे। किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः। यथा - अनेन व्याकरणमधीत मेनं छन्दो ऽध्यापयेति। अनयोः पवित्रं कुलमेनयोः प्रभूतं स्वामिति॥ एनम्। एनौ। एनान्। एनेन। एनयोः। एनयोः॥ **राजा**॥

**न ङिसम्बुद्ध्योः॥ लसक_२८३ = पा_८,२.८॥**

नस्य लोपो न ङौ सम्बुद्धौ च। हे राजन्। (*ङावुत्तरपदे प्रतिषेधो वक्तव्यः*)। ब्रह्मनिष्ठः। राजानौ। राजानः। राज्ञः॥

**नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति॥ लसक_२८४ = पा_८,२.२॥**

सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपो ऽसिद्धो नान्यत्र - राजाश्व इत्यादौ। इत्यसिद्धत्वादात्वमेत्त्वमैस्त्वं च न। राजभ्याम्। राजभिः। राज्ञि, राजनि। राजसु॥ **यज्वा**। यज्वानौ। यज्वानः॥

**न संयोगाद्वमन्तात्॥ लसक_२८५ = पा_६,४.१३७॥**

वमन्तसंयोगादनो ऽकारस्य लोपो न। यज्वनः। यज्वा। यज्वभ्याम्॥ ब्रह्मणः। ब्रह्मणा॥

**इन्हन्पूषार्यम्णां शौ॥ लसक_२८६ = पा_६,४.१२॥**

एषां शावेवोपधाया दीर्घो नान्यत्र। इति निषेधे प्राप्ते - .

**सौ च॥ लसक_२८७ = पा_६,४.१३॥**

इन्नादीनामुपधाया दीर्घो ऽसंबुद्धौ सौ। **वृत्रहा**। हे वृत्रहन्॥

**एकाजुत्तरपदे णः॥ लसक_२८८ = पा_८,४.१२॥**

एकाजुत्तपरदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रतिपदिकान्तनुम्विभक्तिस्थस्य नस्य णः। वृत्रहणौ॥

**हो हन्तेर्ञ्णिन्नेषु॥ लसक_२८९ = पा_७,३.५४॥**

ञिति णिति प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वम्। वृत्रघ्नः इत्यादि। एवं शार्ङ्गिन्, यशस्विन्, अर्यमन्, पूषन्॥

**मघवा बहुलम्॥ लसक_२९० = पा_६,४.१२८॥**

मघवन्शब्दस्य वा तृ इत्यन्तादेशः। ऋ इत्॥

**उगिदचां सर्वनामस्थाने ऽधातोः॥ लसक_२९१ = पा_७,१.७०॥**

अधातोरुगितो नलोपिनो ऽञ्चतेश्च नुम् स्यात्सर्वनामस्थाने परे। **मघवान्**। मघवन्तौ। मघवन्तः। हे मघवन्। मघवद्भ्याम्। तृत्वाभावे **मघवा**। सुटि राजवत्॥

**श्वयुवमघोनामतद्धिते॥ लसक_२९२ = पा_६,४.१३३॥**

अन्नन्तानां भानामेषामतद्धिते संप्रसारणम्। मघोनः। मघवभ्याम्। एवं **श्वन्, युवन्**॥

**न संप्रसारणे संप्रसारणम्॥ लसक_२९३ = पा_६,१.३७॥**

संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात्। इति यकारस्य नेत्वम्। अत एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम्। यूनः। यूना। युवभ्याम् इत्यादि॥ **अर्वा**। हे अर्वन्॥

**अर्वणस्त्रसावनञः॥ लसक_२९४ = पा_६,४.१२७॥**

नञा रहितस्यार्वन्नित्यस्याङ्गस्य तृ इत्यन्तादेशो न तु सौ। अर्वन्तौ। अर्वन्तः। अर्वद्भ्यामित्यादि॥

**पथिमथ्यृभुक्षामात्॥ लसक_२९५ = पा_७,१.८५॥**

एषामाकारो ऽन्तादेशः स्यात् सौ परे॥

**इतो ऽत्सर्वनामस्थाने॥ लसक_२९६ = पा_७,१.८६॥**

पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे॥

**थो न्थः॥ लसक_२९७ = पा_७,१.८७॥**

पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने। **पन्थाः**। पन्थानौ। पन्थानः॥

**भस्य टेर्लोपः॥ लसक_२९८ = पा_७,१.८८॥**

भस्य पथ्यादेष्टेर्लोपः। पथः। पथा। पथिभ्याम्॥ एवं मथिन्, ऋभुक्षिन्॥

**ष्णान्ता षट्॥ लसक_२९९ = पा_१,१.२४॥**

षान्ता नान्ता च संख्या षट्संज्ञा स्यात्। **पञ्चन्**शब्दो नित्यं बहुवचनान्तः। पञ्च। पञ्च। पञ्चभिः। पञ्चभ्यः। पञ्चभ्यः। नुट्॥

**नोपधायाः॥ लसक_३०० = पा_६,४.७॥**

नान्तस्योपधाया दीर्घो नामि। पञ्चानाम्। पञ्चसु॥

**अष्टन आ विभक्तौ॥ लसक_३०१ = पा_७,२.८४॥**

हलादौ वा स्यात्॥

**अष्टाभ्य औश्॥ लसक_३०२ = पा_७,१.२१॥**

कृताकारादष्टनो जश्शसोरौश्। अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति। **अष्टौ**। अष्टौ। अष्टाभिः। अष्टाभ्यः। अष्टाभ्यः। अष्टानाम्। अष्टासु। आत्वाभावे अष्ट, पञ्चवत्॥

**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च॥ लसक_३०३ = पा_३,२.५९॥**

एभ्यः क्विन्, अञ्चेः सुप्युपपदे, युजिक्रुञ्चोः, केवलयोः, क्रुञ्चेर्नलोपाभावश्च निपात्यते। कनावितौ॥

**कृदतिङ्॥ लसक_३०४ = पा_३,१.९३॥**

अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात्॥

**वेरपृक्तस्य॥ लसक_३०५ = पा_६,१.६७॥**

अपृक्तस्य वस्य लोपः॥

**क्विन्प्रत्ययस्य कुः॥ लसक_३०६ = पा_८,२.६२॥**

क्विन्प्रत्ययो यस्मात्तस्य कवर्गो ऽन्तादेशः पदान्ते। अस्यासिद्धत्वाच्चोः कुरिति कुत्वम्। **ऋत्विक्**, ऋत्विग्। ऋत्विजौ। ऋत्विग्भ्याम्॥

**युजेरसमासे॥ लसक_३०७ = पा_७,३.७१॥**

युजेः सर्वनामस्थाने नुम् स्यादसमासे। सुलोपः। संयोगान्तलोपः। कुत्वेन नस्य ङः। **युङ्**। अनुस्वारपरसवर्णौ। युञ्जौ। युञ्जः। युग्भ्याम्॥

**चोः कुः॥ लसक_३०८ = पा_८,२.३०॥**

चवर्गस्य कवर्गः स्याज्झलि पदान्ते च। **सुयुक्**, सुयुग्। सुयुजौ। सुयुग्भ्याम्॥ **खन्**। खञ्जौ। खन्भ्याम्॥

**व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः॥ लसक_३०९ = पा_८,२.३६॥**

झलि पदान्ते च। जश्त्वचर्त्वे। **राट्**, राड्। राजौ। राजः। राड्भ्याम्॥ एवं विभ्राट्, देवेट्, विश्वसृट्॥ (*परौ व्रजेः षः पदान्ते*)। परावुपपदे व्रजेः क्विप् स्याद्दीर्घश्च पदान्ते षत्वमपि। परिव्राट्। परिव्राजौ॥

**विश्वस्य वसुराटोः॥ लसक_३१० = पा_६,३.१२८॥**

विश्वशब्दस्य दीर्घो ऽन्तादेशः स्याद्सौ राट्शब्दे च परे। **विश्वराट्**, विश्वराड्। विश्वराजौ। विश्वराड्भ्याम्॥

**स्कोः संयोगाद्योरन्ते च॥ लसक_३११ = पा_८,२.२९॥**

पदान्ते झलि च यः संयोगस्तदाद्योः स्कोर्लोपः। **भृट्**। सस्य श्चुत्वेन सः। झलां जश् झशि इति शस्य जः। भृज्जौ। भृड्भ्याम्॥ त्यदाद्यत्वं पररूपत्वं च॥

**तदोः सः सावनन्त्ययोः॥ लसक_३१२ = पा_७,२.१०६॥**

त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ। **स्यः**। त्यौ। त्ये॥ **सः**। तौ। ते॥ **यः**। यौ। ये॥ **एषः**। एतौ। एते॥

**ङेप्रथमयोरम्॥ लसक_३१३ = पा_७,१.२८॥**
युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः॥

**त्वाहौ सौ॥ लसक_३१४ = पा_७,२.९४॥**
अनयोर्मपर्यन्तस्य त्वाहौ आदेशौ स्तः॥

**शेषे लोपः॥ लसक_३१५ = पा_७,२.९०॥**
एतयोष्टिलोपः। **त्वम्**। **अहम्**॥

**युवावौ द्विवचने॥ लसक_३१६ = पा_७,२.८२॥**
द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ॥

**प्रथमायाश्च द्विवचने भाषायाम्॥ लसक_३१७ = पा_७,२.८८॥**
औङ्येतयोरात्वं लोके। युवाम्। आवाम्॥

**यूयवयौ जसि॥ लसक_३१८ = पा_७,२.९३॥**
अनयोर्मपर्यन्तस्य। यूयम्। वयम्॥

**त्वमावेकवचने॥ लसक_३१९ = पा_७,२.९७॥**
एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ॥

**द्वितीयायाञ्च॥ लसक_३२० = पा_७,२.८७॥**
अनयोरात्स्यात्। त्वाम्। माम्॥

**शसो न॥ लसक_३२१ = पा_७,१.२९॥**
आभ्यां शसो नः स्यात्। अमो ऽपवादः। आदेः परस्य। संयोगान्तलोपः। युष्मान्। अस्मान्॥

**यो ऽचि॥ लसक_३२२ = पा_७,२.८९॥**
अनयोर्यकारादेशः स्यादनादेशे ऽजादौ परतः। त्वया। मया॥

**युष्मदस्मदोरनादेशे॥ लसक_३२३ = पा_७,२.८६॥**
अनयोरात्स्यादनादेशे हलादौ विभक्तौ। युवाभ्याम्। आवाभ्याम्। युष्माभिः। अस्माभिः॥

**तुभ्यमह्यौ ङयि॥ लसक_३२४ = पा_७,२.९५॥**
अनयोर्मपर्यन्तस्य। टिलोपः। तुभ्यम्। मह्यम्॥

**भ्यसो ऽभ्यम्॥ लसक_३२५ = पा_७,१.३०॥**
आभ्यां परस्य। युष्मभ्यम्। अस्मभ्यम्॥

**एकवचनस्य च॥ लसक_३२६ = पा_७,१.३२॥**
आभ्यां ङसेरत्। त्वत्। मत्॥

**पञ्चम्या अत्॥ लसक_३२७ = पा_७,१.३१॥**
आभ्यां पञ्चम्यां भ्यसो ऽत्स्यात्। युष्मत्। अस्मत्॥

**तवममौ ङसि॥ लसक_३२८ = पा_७,२.९६॥**

अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि॥

**युष्मदस्मद्भ्यां ङसो ऽश्॥ लसक_३२९ = पा_७,१.२७॥**
तव। मम। युवयोः। आवयोः॥

**साम आकम्॥ लसक_३३० = पा_७,१.३३॥**
आभ्यां परस्य साम आकं स्यात्। युष्माकम्। अस्माकम्। त्वयि। मयि। युवयोः। आवयोः। युष्मासु। अस्मासु॥
**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ॥ लसक_३३१ = पा_८,१.२०॥**
पदात्परयोरपादादौ स्थितयोः षष्ठ्यादिविशिष्टयोर्वा नौ इत्यादेशौ स्तः॥

**बहुवचनस्य वस्नसौ॥ लसक_३३२ = पा_८,१.२१॥**
उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः॥

**तेमयावेकवचनस्य॥ लसक_३३३ = पा_८,१.२२॥**
उक्तविधयोरनयोष्षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः॥

**त्वामौ द्वितीयायाः॥ लसक_३३४ = पा_८,१.२३॥**
द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ स्तः॥
श्रीशस्तवावतु मापीह दत्तात्ते मे ऽपि शर्म सः। स्वामी ते मे ऽपि स हरिः पातु वामपि नौ विभुः॥
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः। सो ऽव्याद्वो नः शिवं वो नो दद्यात् सेव्यो ऽत्र वः स नः॥
(*एकवाक्ये युष्मदस्मदादेशा वक्तव्याः*)। एकतिङ् वाक्यम्। ओदनं पच तव भविष्यति। (*एते वान्नावादयो ऽनन्वादेशे वा वक्तव्याः*)। अन्वादेशे तु नित्यं स्युः। धाता ते भक्तो ऽस्ति, धाता तव भक्तो ऽस्ति वा। तस्मै ते नम इत्येव॥ **सुपात्**, सुपाद्॥ सुपदौ॥

**पादः पत्॥ लसक_३३५ = पा_६,४.१३०॥**
पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः॥ सुपदः। सुपदा। सुपाद्भ्याम्॥ **अग्निमत्**, अग्निमद्। अग्निमथौ। अग्निमथः॥

**अनिदितां हल उपधायाः क्ङिति॥ लसक_३३६ = पा_६,४.२४॥**
हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति। नुम्। संयोगान्तस्य लोपः। नस्य कुत्वेन ङः। **प्राङ्**। प्राञ्चौ। प्राञ्चः॥

**अचः॥ लसक_३३७ = पा_६,४.१३८॥**
लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः॥

**चौ॥ लसक_३३८ = पा_६,३.१३८॥**
लुप्ताकारनकारे ऽञ्चतौ परे पूर्वस्याणो दीर्गः। प्राचः। प्राचा। प्राग्भ्याम्॥ **प्रत्यङ्**। प्रत्यञ्चौ। प्रतीचः। प्रत्यग्भ्याम्॥ **उदङ्**। उदञ्चौ॥

**उद ईत्॥ लसक_३३९ = पा_६,४.१३९॥**
उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत्। उदीचः। उदीचा। उदग्भ्याम्। ,

**समः समि॥ लसक_३४० = पा_६,३.९३॥**
वप्रत्ययान्ते ऽञ्चतौ। **सम्यङ्**। सम्यञ्चौ। समीचः। सम्यग्भ्याम्॥ ,

**सहस्य सध्रिः॥ लसक_३४१ = पा_६,३.९५॥**
तथा। सध्र्यङ्॥ ,

**तिरसस्तिर्यलोपे॥ लसक_३४२ = पा_६,३.९४॥**
अलुप्ताकारे ऽञ्चतौ वप्रत्ययान्ते तिरसस्तिर्यादेशः। **तिर्यङ्**। तिर्यञ्चौ। तिरश्चः। तिर्यग्भ्याम्॥ ,

**नाञ्चेः पूजायाम्॥ लसक_३४३ = पा_६,४.३०॥**

पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न। **प्राङ्**। प्राञ्चौ। नलोपाभावादलोपो न। प्राञ्चः। प्राङ्भ्याम्। प्राङ्क्षु॥ एवं पूजार्थे प्रत्यङ्ङादयः॥ **क्रुङ्**। क्रुञ्चौ। क्रुङ्भ्याम्॥ **पयोमुक्,** पयोमुग्। पयोमुचौ। पयोमुग्भ्याम्॥ उगित्त्वान्नुमि - ,

**सान्तमहतः संयोगस्य॥ लसक_३४४ = पा_६,४.१०॥**
सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घो ऽसम्बुद्धौ सर्वनामस्थाने। **महान्**। महान्तौ। महान्तः। हे महन्। महद्भ्याम्॥ ,

**अत्वसन्तस्य चाधातोः॥ लसक_३४५ = पा_६,४.१४॥**
अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे। उगित्तवान्नुम्। **धीमान्**। धीमन्तौ। धीमन्तः। हे धीमन् शसादौ महद्वत्॥ भातेर्डवतुः। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। **भवान्**। भवान्तौ। भवन्तः। शत्रन्तस्य भवन्॥ ,

**उभे अभ्यस्तम्॥ लसक_३४६ = पा_६,१.५॥**
षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः॥ ,

**नाभ्यस्ताच्छतुः॥ लसक_३४७ = पा_७,१.७८॥**
अभ्यस्तात्परस्य शतुर्नुम् न। **ददत्**, ददद्। ददतौ। ददतः॥ ,

**जक्षित्यादयः षट्॥ लसक_३४८ = पा_६,१.६॥**
षड्धातवो ऽन्ये जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञाः स्युः। **जक्षत्**, जक्षद्। जक्षतौ। जक्षतः॥ एवं जाग्रत्। दरिद्रत्। शासत्। चकासत्॥ गुप्, गुब्। गुपौ। गुपः। गुब्भ्याम्॥ ,

**त्यदादिषु दृशो ऽनालोचने कञ्च॥ लसक_३४९ = पा_३,२.६०॥**
त्यदादिषूपपदेष्वज्ञानार्थाद्दृशेः कञ् स्यात्। चात् क्विन्॥ ,

**आ सर्वनाम्नः॥ लसक_३५० = पा_६,३.९१॥**
सर्वनाम्न आकारो ऽन्तादेशः स्याद्दृग्दृशवतुषु। **तादृक्**, तादृग्। तादृशौ। तादृशः। तादृग्भ्याम्॥ व्रश्चेति षः। जश्त्वचर्त्वे। **विट्**, विड्। विशौ। विशः। विड्भ्याम्॥ ,

**नशेर्वा॥ लसक_३५१ = पा_८,२.६३॥**
नशेः कवर्गो ऽन्तादेशो वा पदान्ते। **नक्**, नग्, नट्, नड्। नशौ। नशः। नग्भ्याम्, नड्भ्याम्॥ ,

**स्पृशो ऽनुदके क्विन्॥ लसक_३५२ = पा_३,२.५८॥**
अनुदके सुप्युपपदे स्पृशेः क्विन्। **घृतस्पृक्**, घृतस्पृग्। घृतस्पृशौ। घृतस्पृशः॥ **दधृक्**, दधृग्। दधृषौ। दधृग्भ्याम्॥ रत्नमुषौ। रत्नमुड्भ्याम्॥ **षट्**, षड्। षड्भिः। षड्भ्यः। षण्णाम्। षट्सु॥ रुत्वं प्रति षत्वस्यासिद्धत्वससजुषो रुरिति रुत्वर्म्॥ ,

**वोरुपधाया दीर्घ इकः॥ लसक_३५३ = पा_८,२.७६॥**
रेफवान्तयोर्धात्वोरुपधाया इको दीर्घः पदान्ते। **पिपठीः**। पिपठिषौ। पिपठीर्भ्याम्॥ ,

**नुम्विसर्जनीयशर्व्यवाये ऽपि॥ लसक_३५४ = पा_८,३.५८॥**
एतैः प्रत्येकं व्यवधाने ऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः। ष्टुत्वेन पूर्वस्य षः। पिपठीष्षु, पिपठीःषु॥ **चिकीः**। चिकीर्षौ। चिकीर्भ्याम्। चिकीर्षु॥ **विद्वान्**। विद्वांसौ। हे विद्वन्॥ ,

**वसोः सम्प्रसारणम्॥ लसक_३५५ = पा_६,४.१३१॥**
वस्वन्तस्य भस्य सम्प्रसारणं स्यात्। विदुषः। वसुस्रंस्विति दः। विद्वद्भ्याम्॥

**पुंसो ऽसुङ्॥ लसक_३५६ = पा_७,१.८९॥**
सर्वनामस्थाने विवक्षिते पुंसो ऽसुङ् स्यात्। **पुमान्**। हे पुमन्। पुमांसौ। पुंसः। पुम्भ्याम्। पुंसु॥ ऋदुशनेत्यनङ्। **उशना**। उशनसौ। *(अस्य संबुद्धौ वानङ्, नलोपश्च वा वाच्यः)*। हे उशन, हेउशनन्, हेउशनः। हे उशनसौ। उशनोभ्याम्। उशनस्सु॥ **अनेहा**। अनेहसौ। हे अनेहः॥ **वेधाः**। वेधसौ। हे वेधः। वेधोभ्याम्॥

**नपुंसकादन्यतरस्याम्॥ लसक_९२३ = पा_५,४.१०९॥**

अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात्। उपचर्मम्। उपचर्म॥

**झयः॥ लसक_९२४ = पा_५,४.१११॥**

झयन्तादव्ययीभावाट्टज्वा स्यात्। उपसमिधम्। उपसमित्॥

इत्यव्ययीभावः॥ २॥

अथ तत्पुरुषः

**तत्पुरुषः॥ लसक_९२५ = पा_२,१.२२॥**
अधिकारोऽयं प्राग्बहुव्रीहेः॥

**द्विगुश्च॥ लसक_९२६ = पा_२,१.२३॥**
द्विगुरपि तत्पुरुषसंज्ञकः स्यात्॥

**द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः॥ लसक_९२७ = पा_२,१.२४॥**
द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स च तत्पुरुषः। कृष्णं श्रितः कृष्णश्रित इत्यादि॥

**तृतीया तत्कृतार्थेन गुणवचनेन॥ लसक_९२८ = पा_२,१.३०॥**
तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह वा प्राग्वत्। शङ्कुलया खण्डः। धान्येनार्थो धान्यार्थः। तत्कृतेति किम्? अक्ष्णा काणः॥

**कर्तृकरणे कृता बहुलम्॥ लसक_९२९ = पा_२,१.३२॥**
कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत्। हरिणा त्रातो हरित्रातः। नखैर्भिन्नः नखभिन्नः। (प.) कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्। नखनिर्भिन्नः॥

**चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः॥ लसक_९३० = पा_२,१.३६॥**
चतुर्थ्यन्तार्थाय यत् तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत्। यूपाय दारु यूपदारु। (*तदर्थेन प्रकृतिविकृतिभाव एवेष्टः*)। तेनेह न - रन्धनाय स्थाली। (*अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्*)। द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थं पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्॥

**पञ्चमी भयेन॥ लसक_९३१ = पा_२,१.३७॥**
चोराद्भयं चोरभयम्॥

**स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन॥ लसक_९३२ = पा_२,१.३९॥**

**पञ्चम्याः स्तोकादिभ्यः॥ लसक_९३३ = पा_६,३.२॥**
अलुगुत्तरपदे। स्तोकान्मुक्तः। अन्तिकादागतः। अभ्याशादागतः। दूरादागतः। कृच्छ्रादागतः॥

**षष्ठी॥ लसक_९३४ = पा_२,२.८॥**
सुबन्तेन प्राग्वत्। राजपुरुषः॥

**पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे॥ लसक_९३५ = पा_२,२.१॥**
अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी। षष्ठीसमासापवादः। पूर्वं कायस्य पूर्वकायः। अपरकायः। एकाधिकरणे किम्? पूर्वश्छात्राणाम्॥

**अर्धं नपुंसकम्॥ लसक_९३६ = पा_२,२.२॥**
समांशवाच्यर्धशब्दो नित्यं क्लीबे, स प्राग्वत्। अर्धं पिप्पल्याः अर्धपिप्पली।

**सप्तमी शौण्डैः॥ लसक_९३७ = पा_२,१.४०॥**
सप्तम्यन्तं शौण्डादिभिः प्राग्वत्। अक्षेषु शौण्डः अक्षशोण्ड इत्यादि। द्वितीयातृतीयेत्यादियोगविभागादन्यत्रापि तृतीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः॥

**दिक्संख्ये संज्ञायाम्॥ लसक_९३८ = पा_२,१.५०॥**
संज्ञायामेवेति नियमार्थं सूत्रम्। पूर्वेषुकामशमी। सप्तर्षयः। तेनेह न - उत्तरा वृक्षाः। पञ्च ब्राह्मणाः॥

**तद्धितार्थोत्तरपदसमाहारे च॥ लसक_९३९ = पा_२,१.५१॥**
तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वत्। पूर्वस्यां शालायां भवः - पूर्वा शाला इति समासे जाते *(सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः)*॥

**दिक्पूर्वपदादसंज्ञायां ञः॥ लसक_९४० = पा_४,२.१०७॥**
अस्माद्भवाद्यर्थे ञः स्यादसंज्ञायाम्॥

**तद्धितेष्वचामादेः॥ लसक_९४१ = पा_७,२.११७॥**
ञिति णिति च तद्धितेष्वचामादेरचो वृद्धिः स्यात्। यस्येति च। पौर्वशालः। पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ। (*द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्य समासवचनम्*)॥

**गोरतद्धितलुकि॥ लसक_९४२ = पा_५,४.९२॥**
गो ऽन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धितलुकि। पञ्चगवधनः॥

**तत्पुरुषः समानाधिकरणः कर्मधारयः॥ लसक_९४३ = पा_१,२.४२॥**

**संख्यापूर्वो द्विगुः॥ लसक_९४४ = पा_२,१.५२॥**
तद्धितार्थेत्यत्रोक्तस्त्रिविधः संख्यापूर्वो द्विगुसंज्ञः स्यात्॥

**द्विगुरेकवचनम्॥ लसक_९४५ = पा_२,४.१॥**
द्विग्वर्थः समाहार एकवत्स्यात्॥

**स नपुंसकम्॥ लसक_९४६ = पा_२,४.१७॥**
समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात्। पञ्चानां गवां समाहारः पञ्चगवम्।

**विशेषणं विशेष्येण बहुलम्॥ लसक_९४७ = पा_२,१.५७॥**
भेदकं भेद्येन समानाधिकरणेन बहुलं प्राग्वत्। नीलमुत्पलं नीलोत्पलम्। बहुलग्रहणात्क्वचिन्नित्यम् - कृष्णसर्पः। क्वचिन्न - रामो जामदग्न्यः॥

**उपमानानि सामान्यवचनैः॥ लसक_९४८ = पा_२,१.५५॥**
घन इव श्यामो घनश्यामः। (*शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्*)। शाकप्रियः पार्थिवः शाकपार्थिवः। देवपूजको ब्राह्मणो देवब्राह्मणः॥

**नञ्॥ लसक_९४९ = पा_२,१.६॥**
नञ् सुपा सह समस्यते॥

**नलोपो नञः॥ लसक_९५० = पा_६,३.७३॥**
नञो नस्य लोप उत्तरपदे। न ब्राह्मणः अब्राह्मणः॥

**तस्मान्नुडचि॥ लसक_९५१ = पा_६,३.७४॥**
लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात्। अनश्वः। नैकधेत्यादौ तु नशब्देन सह सुप्सुपेति समासः॥

**कुगतिप्रादयः॥ लसक_९५२ = पा_२,२.१८॥**
एते समर्थेन नित्यं समस्यन्ते। कुत्सितः पुरुषः कुपुरुषः॥

**ऊर्यादिच्विडाचश्च॥ लसक_९५३ = पा_१,४.६१॥**
ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः। ऊरीकृत्य। शुक्लीकृत्य। पटपटाकृत्य। सुपुरुषः॥ *(प्रादयो गताद्यर्थे प्रथमया)*। प्रगत आचार्यः प्राचार्यः। (*अत्यादयः क्रान्ताद्यर्थे द्वितीयया*)। अतिक्रान्तो मालामिति विग्रहे - .

**एकविभक्ति चापूर्वनिपाते॥ लसक_९५४ = पा_१,२.४४॥**

विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यान्न तु तस्य पूर्वनिपातः॥

**गोस्त्रियोरुपसर्जनस्य॥ लसक_९५५ = पा_१,२.४८॥**

उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्। अतिमालः। (*अवादयः क्रुष्टाद्यर्थे तृतीयया*)। अवक्रुष्टः कोकिलया - अवकोकिलः। (*पर्यादयो ग्लानाद्यर्थे चतुर्थ्या*)। परिग्लानो ऽध्ययनाय पर्यध्ययनः। (*निरादयः क्रान्ताद्यर्थे पञ्चम्या*)। निष्क्रान्तः कौशाम्ब्याः - निष्कौशाम्बिः॥

**तत्रोपपदं सप्तमीस्थम्॥ लसक_९५६ = पा_३,१.९२॥**

सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात्॥

**उपपदमतिङ्॥ लसक_९५७ = पा_२,२.१९॥**

उपपदं सुबन्तं समर्थेन नित्यं समस्यते। अतिङन्तश्चायं समासः। कुम्भम् करोति कुम्भकारः। अतिङ् किम् ? मा भवान् भूत्। माङि लुङिति सप्तमीनिर्देशान्माङुपपदम्। (प.) <u>गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः</u>। व्याघ्री। अश्वक्रीती। कच्छपीत्यादि॥

**तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः॥ लसक_९५८ = पा_५,४.८६॥**

संख्याव्ययादेरङ्गुल्यन्तस्य समासान्तो ऽच् स्यात्। द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम्। निर्गतमङ्गुल्यो निरङ्गुलम्॥

**अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः॥ लसक_९५९ = पा_५,४.८७॥**

एभ्यो रात्रेरच् स्याच्चात्संख्याव्ययादेः। अहर्ग्रहणं द्वन्द्वार्थम्॥

**रात्राह्नाहाः पुंसि॥ लसक_९६० = पा_२,४.२९॥**

एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव। अहश्च रात्रिश्चाहोरात्रः। सर्वरात्रः। संख्यातरात्रः। (*संख्यापूर्वं रात्रं क्लीबम्*)। द्विरात्रम्। त्रिरात्रम्॥

**राजाहः सखिभ्यष्टच्॥ लसक_९६१ = पा_५,४.९१॥**

एतदन्तात्तत्पुरुषाट्टच् स्यात्। परमराजः॥

**आन्महतः समानाधिकरणजातीययोः॥ लसक_९६२ = पा_६,३.४६॥**

महत आकारो ऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे। महाराजः। प्रकारवचने जातीयर्। महाप्रकारो महाजातीयः॥

**द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः॥ लसक_९६३ = पा_६,३.४७॥**

आत्स्यात्। द्वौ च दश च द्वादश। अष्टाविंशतिः॥

**त्रेस्त्रयः॥ लसक_९६४ = पा_६,३.४८॥**

त्रयोदश। त्रयोविंशतिः। त्रयस्त्रिंशत्॥

**परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः॥ लसक_९६५ = पा_२,४.२६॥**

एतयोः परपदस्येव लिङ्गं स्यात्। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। (*द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः*ः)। पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः॥

**प्राप्तापन्ने च द्वितीयया॥ लसक_९६६ = पा_२,२.४॥**

समस्येते। अकारश्चानयोरन्तादेशः। प्राप्तो जीविकां प्राप्तजीविकः। आपन्नजीविकः। अलं कुमार्यै - अलंकुमारिः। अत एव ज्ञापकात्समासः। निष्कौशाम्बिः॥

**अर्धर्चाः पुंसि च॥ लसक_९६७ = पा_२,४.३१॥**

&न्ब्स्प्‌र्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः। अर्धर्चः। अर्धर्चम्। एवं ध्वजतीर्थशरीरमण्डपयूपदेहाङ्कुशपात्रसूत्रादयः। सामान्ये नपुंसकम्। मृदु पचति। प्रातः कमनीयम्॥

अथ बहुव्रीहिः

**शेषो बहुव्रीहिः॥ लसक_९६८ = पा_२,२.२३॥**
अधिकारो ऽयं प्राग्द्वन्द्वात्॥

**अनेकमन्यपदार्थे॥ लसक_९६९ = पा_२,२.२४॥**
अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः॥

**सप्तमीविशेषणे बहुव्रीहौ॥ लसक_९७० = पा_२,२.३५॥**
सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात्। अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः॥

**हलन्तात्सप्तम्याः संज्ञायाम्॥ लसक_९७१ = पा_६,३.९॥**
हलन्ताददन्ताच्च सप्तम्या अलुक्। कण्ठेकालः। प्राप्तमुदकं यं स प्राप्तोदको ग्रामः। ऊढरथो ऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। पीताम्बरो हरिः। वीरपुरुषको ग्रामः। (*प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः*)। प्रपतितपर्णः, प्रपर्णः। (*नञो ऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः*) अविद्यमानपुत्रः, अपुत्रः॥

**स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु॥ लसक_९७२ = पा_६,३.३४॥**
उक्तपुंस्कादनूङ् ऊङोऽभावो ऽस्यामिति बहुव्रीहिः। निपातनात्पञ्चम्या अलुक् षष्ठ्याश्च लुक्। तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः। गोस्त्रियोरिति ह्रस्वः। चित्रगुः। रूपवद्भार्यः। अनूङ् किम्? वामोरूभार्यः॥ पूरण्यां तु - .

**अप्पूरणीप्रमाण्योः॥ लसक_९७३ = पा_५,४.११६॥**
पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहे रप्स्यात्। कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणी पञ्चमा रात्रयः। स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः। अप्रियादिषु किम्? कल्याणीप्रिय इत्यादि॥

**बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्॥ लसक_९७४ = पा_५,४.११३॥**
स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात्। दीर्घसक्थः। जलजाक्षी। स्वाङ्गात्किम्? दीर्घसक्थि शकटम्। स्थूलाक्षा वेणुयष्टिः। अक्ष्णो ऽदर्शनादिति वक्ष्यमाणो ऽच्॥

**द्वित्रिभ्यां ष मूर्ध्नः॥ लसक_९७५ = पा_५,४.११५॥**
आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ। द्विमूर्धः। त्रिमूर्धः॥

**अन्तर्बहिर्भ्यां च लोम्नः॥ लसक_९७६ = पा_५,४.११७॥**
आभ्यां लोम्नो ऽप्स्याद्बहुव्रीहौ। अन्तर्लोमः। बहिर्लोमः॥

**पादस्य लोपो ऽहस्त्यादिभ्यः॥ लसक_९७७ = पा_५,४.१३८॥**
हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ। व्याघ्रस्येव पादावस्य व्याघ्रपात्। अहस्त्यादिभ्यः किम्? हस्तिपादः। कुसूलपादः॥

**संख्यासुपूर्वस्य॥ लसक_९७८ = पा_५,४.१४०॥**
पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ। द्विपात्। सुपात्॥

**उद्विभ्यां काकुदस्य॥ लसक_९७९ = पा_५,४.१४८॥**
लोपः स्यात्। उत्काकुत्। विकाकुत्॥

**पूर्णाद्विभाषा॥ लसक_९८० = पा_५,४.१४९॥**
पूर्णकाकुत्। पूर्णकाकुदः॥

**सुहृद्दुर्हृदौ मित्रामित्रयोः॥ लसक_९८१ = पा_५,४.१५०॥**
सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते। सुहृन्मित्रम्। दुर्हृदमित्रः॥

**उरः प्रभृतिभ्यः कप्॥ लसक_९८२ = पा_५,४.१५१॥**

**सो ऽपदादौ॥ लसक_९८३ = पा_८,३.३८॥**
पाशकल्पककाम्येषु विसर्गस्य सः॥

**कस्कादिषु च॥ लसक_९८४ = पा_८,३.४८॥**
एष्विण उत्तरस्य विसर्गस्य षो ऽन्यस्य तु सः। इति सः। व्यूढोरस्कः॥

**इणः षः॥ लसक_९८५ = पा_८,३.३९॥**
इण उत्तरस्य विसर्गस्य षः पाशकल्पककाम्येषु परेषु। प्रियसर्पिष्कः॥

**निष्ठा॥ लसक_९८६ = पा_२,२.३६॥**
निष्ठान्तं बहुव्रीहौ पूर्वं स्यात्। युक्तयोगः॥

**शेषाद्विभाषा॥ लसक_९८७ = पा_५,४.१५४॥**
अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा। महायशस्कः, महायशाः॥

इति बहुव्रीहिः॥ ४॥

अथ द्वन्द्वः

**चार्थे द्वन्द्वः॥ लसक_९८८ = पा_२,२.२९॥**
अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः। समुच्चयान्वाचयेत रेतरयोगसमाहाराश्चार्थाः। तत्र "ईश्वरं गुरुं च भजस्व&८२१७' इति परस्परनिरपेक्षस्यानेक स्यैकस्मिन्नन्वयः समुच्चयः। "भिक्षामट गां चानय&८२१७' इत्यन्यतरस्यानुषङ्गिकत्वेन अन्वयो ऽन्वाचयः। अनयोरसामर्थ्यात्समासो न। "धवखदिरौ छिन्धि&८२१७' इति मिलितानामन्वय इतरेतरयोगः। "संज्ञापरिभाषम्&८२१७' इति समूहः समाहारः॥

**राजदन्तादिषु परम्॥ लसक_९८९ = पा_२,२.३१॥**
एषु पूर्वप्रयोगार्हं परं स्यात्। दन्तानां राजानो राजदन्ताः। (*धर्मादिष्वनियमः*)। अर्थधर्मौ। धर्मार्थावित्यादि॥

**द्वन्द्वे घि॥ लसक_९९० = पा_२,२.३२॥**
द्वन्द्वे घिसंज्ञं पूर्वं स्यात्। हरिश्च हरश्च हरिहरौ॥

**अजाद्यदन्तम्॥ लसक_९९१ = पा_२,२.३३॥**
द्वन्द्वे पूर्वं स्यात्। ईशकृष्णौ॥

**अल्पाच्तरम्॥ लसक_९९२ = पा_२,२.३४॥**
शिवकेशवौ॥

**पिता मात्रा॥ लसक_९९३ = पा_१,२.७०॥**
मात्रा सहोक्तौ पिता वा शिष्यते। माता च पिता च पितरौ, मातापितरौ वा॥

**द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्॥ लसक_९९४ = पा_२,४.२॥**
एषां द्वन्द्व एकवत्। पाणिपादम्। मार्दङ्गिकवैणविकम्। रथिकाश्वारोहम्॥

**द्वन्द्वाच्चुदषहान्तात्समाहारे॥ लसक_९९५ = पा_५,४.१०६॥**
चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे। वाक् च त्वक् च वाक्त्वचम्। त्वक्स्रजम्। शमीदृषदम्। वाक्त्विषम्। छत्रोपानहम्। समाहारे किम्? प्रावृट्शरदौ॥

इति द्वन्द्वः॥ ५॥

अथ समासान्ताः

**ऋक्पूरब्धूःपथामानक्षे॥ लसक_९९६ = पा_५,४.७४॥**
अ अनक्षे इतिच्छेदः। ऋगाद्यन्तस्य समासस्य अप्रत्ययो ऽन्तावयवो ऽक्षे या धूस्तदन्तस्य तु न। अर्धर्चः। विष्णुपुरम्। विमलापं सरः। राजधुरा। अक्षे तु अक्षधूः। दृढधूरक्षः। सखिपथः। रम्यपथो देशः॥

**अक्ष्णो ऽदर्शनात्॥ लसक_९९७ = पा_५,४.७६॥**
अचक्षुःपर्यायादक्ष्णो ऽच् स्यात्समासान्तः। "गवामक्षीव गवाक्षः&८२१७॑॥

**उपसर्गादध्वनः॥ लसक_९९८ = पा_५,४.८५॥**
प्रगतो ऽध्वानं प्राध्वो रथः॥

**न पूजनात्॥ लसक_९९९ = पा_५,४.६९॥**
पूजनार्थात्परेभ्यः समासान्ता न स्युः। सुराजा। अतिराजा॥

इति समासान्ताः॥

अथ तद्धिताः, तत्रादौ साधारणप्रत्ययाः

**समर्थानां प्रथमाद्वा॥ लसक_१००० = पा_४,१.८२॥**
इदं पदत्रयमधिक्रियते प्राग्दिश इति यावत्॥

**अश्वपत्यादिभ्यश्च॥ लसक_१००१ = पा_४,१.८४॥**
एभ्यो ऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु। अश्वपतेरपत्यादि आश्वपतम्। गाणपतम्॥

**दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः॥ लसक_१००२ = पा_७,२.११७॥**
दित्यादिभ्यः पत्युततरपदाच्च प्राग्दीव्यतियेष्वर्थेषु ण्यः स्यात्। अणो ऽपवादः। दितेरपत्यं दैत्यः। अदितेरादित्यस्य वा॥

**हलो यमां यमि लोपः॥ लसक_१००३ = पा_४,१.८५॥**
हलः परस्य यमो लोपः स्याद् वा यमि। इति यलोपः। आदित्यः। प्राजापत्यः। (*देवाद्यञञौ*)। दैव्यम्/ दैवम्। (*बहिषष्टिलोपो यञ्च*)। बाह्यः (*ईकक्च*)॥

**किति च॥ लसक_१००४ = पा_७,२.११८॥**
किति तद्धिते चाचामादेरचो वृद्धिः स्यात्। वाहीकः। (*गोरजादिप्रसङ्गे यत्*)। गोरपत्यादि गव्यम्॥

**उत्सादिभ्यो ऽञ्॥ लसक_१००५ = पा_४,१.८६॥**
औत्सः॥

इत्यपत्यादिविकारान्तार्थ साधारणप्रत्ययाः॥ १॥

---

अथापत्याधिकारः

**स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्॥ लसक_१००६ = पा_४,१.८७॥**
धान्यानां भवन इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः। स्त्रैणः। पैंस्नः॥

**तस्यापत्यम्॥ लसक_१००७ = पा_४,१.९२॥**
षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः॥

**ओर्गुणः॥ लसक_१००८ = पा_६,४.१४६॥**
उवर्णान्तस्य भस्य गुणस्तद्धिते। उपगोरपत्यमौपगवः। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पैंस्नः॥

**अपत्यं पौत्रप्रभृति गोत्रम्॥ लसक_१००९ = पा_४,१.१६२॥**
अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात्॥

**एको गोत्रे॥ लसक_१०१० = पा_४,१.९३॥**
गोत्रे एक एवापत्यप्रत्ययः स्यात्। उपगोर्गोत्रापत्यमौपगवः॥

**गर्गादिभ्यो यञ्॥ लसक_१०११ = पा_४,१.१०५॥**
गोत्रापत्ये। गर्गस्य गोत्रापत्यं गार्ग्यः। वात्स्यः॥

**यञञोश्च॥ लसक_१०१२ = पा_२,४.६४॥**
गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम्। गर्गाः। वत्साः॥

**जीवति तु वंश्ये युवा॥ लसक_१०१३ = पा_४,१.१६३॥**
वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यात्॥

**गोत्राद्यून्यस्त्रियाम्॥ लसक_१०१४ = पा_४,१.९४॥**
यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्, स्त्रियां तु न युवसंज्ञा॥

**यञिञोश्च॥ लसक_१०१५ = पा_४,१.१०१॥**
गोत्रे यौ यञिञौ तदन्तात्फक् स्यात्॥

**आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्॥ लसक_१०१६ = पा_७,१.२॥**
प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय् एते स्युः/ गर्गस्य युवापत्यं गार्ग्यायणः। दाक्षायणः॥

**अत इञ्॥ लसक_१०१७ = पा_४,१.९५॥**
अपत्येऽर्थे। दाक्षिः॥

**बाह्वादिभ्यश्च॥ लसक_१०१८ = पा_४,१.९६॥**
बाहविः। औडुलोमिः। (*लोम्नो ऽपत्येषु बहुष्वकारो वक्तव्यः*)। उडुलोमाः। आकृतिगणो ऽयम्॥

**अनृष्यानन्तर्ये बिदादिभ्यो ऽञ्॥ लसक_१०१९ = पा_४,१.१०४॥**
एभ्यो ऽञ् गोत्रे। ये त्वत्रानृषयस्तेभ्यो ऽपत्ये ऽन्यत्र तु गोत्रे। बिदस्य गोत्रं बैदः। बैदौ। बिदाः। पुत्रस्यापत्यं पौत्रः। पौत्रौ। पौत्राः। एवं दौहित्रादयः॥

**शिवादिभ्यो ऽण्॥ लसक_१०२० = पा_४,१.११२॥**
अपत्ये। शैवः। गाङ्गः॥

**ऋष्यन्धकवृष्णिकुरुभ्यश्च॥ लसक_१०२१ = पा_४,१.११४॥**

ऋषिभ्यः - वासिष्ठः। वैश्वामित्रः। अन्धकेभ्यः - श्वाफल्कः। वृष्णिभ्यः - वासुदेवः। कुरुभ्यः - नाकुलः। साहदेवः॥

**मातुरुत्संख्यासंभद्रपूर्वायाः॥ लसक_१०२२ = पा_४,१.११५॥**
संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण् प्रत्ययश्च। द्वैमातुरः। षाण्मातुरः। सांमातुरः। भाद्रमातुरः॥

**स्त्रीभ्यो ढक्॥ लसक_१०२३ = पा_४,१.१२०॥**
स्त्रीप्रत्ययान्तेभ्यो ढक्। वैनतेयः॥

**कन्यायाः कनीन च॥ लसक_१०२४ = पा_४,१.११६॥**
चादण्। कानीनो व्यासः कर्णश्च॥

**राजश्वशुराद्यत्॥ लसक_१०२५ = पा_४,१.१३७॥**
(*राज्ञो जातावेवेति वाच्यम्*)॥

**ये चाभावकर्मणोः॥ लसक_१०२६ = पा_६,४.१६८॥**
यादौ तद्धिते परे ऽन् प्रकृत्या स्यान्न तु भावकर्मणोः। राजन्यः। जातावेवेति किम् ? - .

**अन्॥ लसक_१०२७ = पा_६,४.१६७॥**
अन् प्रकृत्या स्यादणि परे। राजनः। श्वशुर्यः॥

**क्षत्राद् घः॥ लसक_१०२८ = पा_४,१.१३८॥**
क्षत्रियः। जातावित्येव/ क्षात्रिरन्यत्र॥

**रेवत्यादिभ्यष्ठक्॥ लसक_१०२९ = पा_४,१.१४६॥**

**ठस्येकः॥ लसक_१०३० = पा_७,३.५०॥**
अङ्गात्परस्य ठस्येकादेशः स्यात्। रैवतिकः॥

**जनपदशब्दात्क्षत्रियादञ्॥ लसक_१०३१ = पा_४,१.१६८॥**
जनपदक्षत्रियवाचकाच्छब्दादञ् स्यादपत्ये। पाञ्चालः। (*क्षत्रियसमान शब्दाज्जनपदात्तस्य राजन्यपत्यवत्*)। पञ्चालानां राजा पाञ्चालः। (*पूरोरण् वक्तव्यः*)। पौरवः। (*पाण्डोर्ड्यण्*)। पाण्ड्यः॥

**कुरुनादिभ्यो ण्यः॥ लसक_१०३२ = पा_४,१.१७२॥**
कौरव्यः। नैषध्यः॥

**ते तद्राजाः॥ लसक_१०३३ = पा_४,१.१७४॥**
अञादयस्तद्राजसंज्ञाः स्युः॥

**तद्राजस्य बहुषु तेनैवास्त्रियाम्॥ लसक_१०३४ = पा_२,४.६२॥**
बहुष्वर्थेषु तद्राजस्य लुक् तदर्थकृते बहुत्वे न तु स्त्रियाम्। इक्ष्वाकवः। पञ्चालाः इत्यादि॥

**कम्बोजाल्लुक्॥ लसक_१०३५ = पा_४,१.१७५॥**
अस्मात्तद्राजस्य लुक्। कम्बोजः। कम्बोजौ। (*कम्बोजादिभ्य इति वक्तव्यम्*)। चोलः। शकः। केरलः। यवनः॥

इत्यपत्याधिकारः॥ २॥

अथ रक्ताद्यर्थकाः

**तेन रक्तं रागात्॥ लसक_१०३६ = पा_४,२.१॥**
अण् स्यात्। रज्यते ऽनेनेति रागः। काषायेण रक्तं वस्त्रं काषायम्॥

**नक्षत्रेण युक्तः कालः॥ लसक_१०३७ = पा_४,२.३॥**
अण् स्यात्। (*तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्*)। पुष्येण युक्तं पौषमहः॥

**लुबविशेषे॥ लसक_१०३८ = पा_४,२.४॥**
पूर्वेण विहितस्य लुप् स्यात् षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते। अद्य पुष्यः॥

**दृष्टं साम॥ लसक_१०३९ = पा_४,२.७॥**
तेनेत्येव। वसिष्ठेन दृष्टं वासिष्ठं साम॥

**वामदेवाड्ड्यड्ड्यौ॥ लसक_१०४० = पा_४,२.९॥**
वामदेवेन दृष्टं साम वामदेव्यम्॥

**परिवृतो रथः॥ लसक_१०४१ = पा_४,२.१०॥**
अस्मिन्नर्थे ऽण् प्रत्ययो भवति। वस्त्रेण परिवृतो वास्त्रो रथः॥

**तत्रोद्धृतममत्रेभ्यः॥ लसक_१०४२ = पा_४,२.१४॥**
शरावे उद्धृतः शाराव ओदनः॥

**संस्कृतं भक्षाः॥ लसक_१०४३ = पा_४,२.१६॥**
सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः। भ्राष्ट्रेषु संस्कृता भ्राष्ट्रा यवाः॥

**सास्य देवता॥ लसक_१०४४ = पा_४,२.२४॥**
इन्द्रो देवतास्येति ऐन्द्रं हविः। पाशुपतम्। बार्हस्पत्यम्॥

**शुक्राद्घन्॥ लसक_१०४५ = पा_४,२.२६॥**
शुक्रियम्॥

**सोमाट्ट्यण्॥ लसक_१०४६ = पा_४,२.३०॥**
सौम्यम्॥

**वाय्वृतुपित्रुषसो यत्॥ लसक_१०४७ = पा_४,२.३१॥**
वायव्यम्। ऋतव्यम्॥

**रीङ् ऋतः॥ लसक_१०४८ = पा_७,४.२७॥**
अकृद्यकारे असार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः। यस्येति च। पित्र्यम्। उषस्यम्॥

**पितृव्यमातुलमातामहपितामहाः॥ लसक_१०४९ = पा_४,२.३६॥**
एते निपात्यन्ते। पितुर्भ्राता पितृव्यः। मातुर्भ्राता मातुलः। मातुः पिता मातामहः। पितुः पिता पितामहः॥

**तस्य समूहः॥ लसक_१०५० = पा_४,२.३७॥**
काकानां समूहः काकम्॥

**भिक्षादिभ्यो ऽण्॥ लसक_१०५१ = पा_६,४.१४६॥**

भिक्षाणां समूहो भैक्षम्। गर्भिणीनां समूहो गार्भिणम्। इह (*भस्याढे तद्धिते*)। इति पुंवद्भावे कृते - .

**इनण्यनपत्ये॥ लसक_१०५२ = पा_४,२.३७॥**

अनपत्यार्थे ऽणि परे इन् प्रकृत्या स्यात्। तेन नस्तद्धित इति टिलोपो न। युवतीनां समूहो यौवनम्॥

**ग्रामजनबन्धुभ्यस्तल्॥ लसक_१०५३ = पा_४,२.४३॥**

तलन्तं स्त्रियाम्। ग्रमता। जनता। बन्धुता। (*गजसहायाभ्यां चेति वक्तव्यम्*)। गजता। सहायता। (*अह्नः खः क्रतौ*)। अहीनः॥

**अचित्तहस्तिधेनोष्ठक्॥ लसक_१०५४ = पा_४,२.४७॥**

**इसुसुक्तान्तात्कः॥ लसक_१०५५ = पा_७,३.५१॥**

इस् उस् उक्तान्तात्परस्य ठस्य कः। साक्तुकम्। हास्तिकम्। धैनुकम्॥

**तदधीते तद्वेद॥ लसक_१०५६ = पा_४,२.५९॥**

**न य्वाभ्याम् पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्॥ लसक_१०५७ = पा_७,३.३॥**

पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किंतु ताभ्यां पूर्वौ क्रमादैजावागमौ स्तः/ व्याकरणमधीते वेद वा वैयाकरणः॥

**क्रमादिभ्यो वुन्॥ लसक_१०५८ = पा_४,२.६१॥**

क्रमकः। पदकः। शिक्षकः। मीमांसकः॥

इति रक्ताद्यर्थकाः॥ ३॥

अथ चातुरर्थिकाः

**तदस्मिन्नस्तीति देशे तन्नाम्नि॥ लसक_१०५९ = पा_४,२.६७॥**
उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरो देशः॥

**तेन निर्वृत्तम्॥ लसक_१०६० = पा_४,२.६८॥**
कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी॥

**तस्य निवासः॥ लसक_१०६१ = पा_४,२.६९॥**
शिबीनां निवासो देशः शैबः॥

**अदूरभवश्च॥ लसक_१०६२ = पा_४,२.७०॥**
विदिशाया अदूरभवं नगरं वैदिशम्॥

**जनपदे लुप्॥ लसक_१०६३ = पा_१,२.५१॥**
जनपदे वाच्ये चातुरर्थिकस्य लुप्॥

**लुपि युक्तवद्व्यक्तिवचने॥ लसक_१०६४ = पा_१,२.५१॥**
लुपि सति प्रकृतिवल्लिङ्गवचने स्तः। पञ्चालानां निवासो जनपदः पञ्चालाः/ कुरवः। अङ्गाः/ वङ्गाः। कलिङ्गाः॥

**वरणादिभ्यश्च॥ लसक_१०६५ = पा_४,२.८२॥**
अजनपदार्थ आरम्भः। वरणानामदूरभवं नगरं वरणाः॥

**कुमुदनडवेतसेभ्यो ड्मतुप्॥ लसक_१०६६ = पा_४,२.८७॥**

**झयः॥ लसक_१०६७ = पा_८,२.१०॥**
झयन्तान्मतोर्मस्य वः। कुमुद्वान्। नड्वान्॥

**मादुपधायाश्च मतोर्वो ऽयवादिभ्यः॥ लसक_१०६८ = पा_८,२.९॥**
मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः। वेतस्वान्॥

**नडशादाड्ड्वलच्॥ लसक_१०६९ = पा_४,२.८८॥**
नड्वलः। शाद्वलः॥

**शिखाया वलच्॥ लसक_१०७० = पा_४,२.८९॥**
शिखावलः॥

इति चातुरर्थिकाः॥ ४॥

अथ शैषिकाः

**शेषे॥ लसक_१०७१ = पा_४,१.९२॥**
अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः स्युः। चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः। औपनिषदः पुरुषः। दृषदि पिष्टा दार्षदाः सक्तवः। चतुर्भिरुह्यं चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दशं रक्षः। "तस्य विकारः&८२१७ इत्यतः प्राक् शेषाधिकारः॥

**राष्ट्रावारपाराद्घखौ॥ लसक_१०७२ = पा_४,२.९३॥**
आभ्यां क्रमाद् घखौ स्तः शेषे। राष्ट्रे जातादिः राष्ट्रियः/ अवारपारीणः/ *(अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्)*। अवारीणः/ पारीणः/ पारावारीणः/ इह प्रकृतिविशेषाद् घादयष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते तेषां जातादयोऽर्थविशेषाः समर्थ विभक्तयश्च वक्ष्यन्ते॥

**ग्रामाद्यखञौ॥ लसक_१०७३ = पा_४,२.९४॥**
ग्राम्यः। ग्रामीणः॥

**नद्यादिभ्यो ढक्॥ लसक_१०७४ = पा_४,२.९७॥**
नादेयम्। माहेयम्। वाराणसेयम्॥

**दक्षिणापश्चात्पुरसस्त्यक्॥ लसक_१०७५ = पा_४,२.९८॥**
दाक्षिणात्यः। पाश्चात्यः। पौरस्त्यः॥

**द्युप्रागपागुदक्प्रतीचो यत्॥ लसक_१०७६ = पा_४,२.१०१॥**
दिव्यम्। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्॥

**अव्ययात्त्यप्॥ लसक_१०७७ = पा_४,२.१०४॥**
*(अमेहक्वतसित्रेभ्य एव)*। अमात्यः। इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः। (*त्यब्नेर्ध्रुव इति वक्तव्यम्*)। नित्यः॥

**वृद्धिर्यस्याचामादिस्तद्वृद्धम्॥ लसक_१०७८ = पा_१,१.७३॥**
यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात्॥

**त्यदादीनि च॥ लसक_१०७९ = पा_१,१.७४॥**
वृद्धसंज्ञानि स्युः॥

**वृद्धाच्छः॥ लसक_१०८० = पा_४,२.११४॥**
शालीयः। मालीयः। तदीयः। (*वा नामधेयस्य वृद्धसंज्ञा वक्तव्या*)। देवदत्तीयः, दैवदत्तः॥

**गहादिभ्यश्च॥ लसक_१०८१ = पा_४,२.१३८॥**
गहीयः॥

**युष्मदस्मदोरन्यतरस्यां खञ् च॥ लसक_१०८२ = पा_४,३.१॥**
चाच्छः। पक्षे ऽण्। युवयोर्युष्माकं युष्मदीयः, अस्मदीयः॥

**तस्मिन्नणि च युष्माकास्माकौ॥ लसक_१०८३ = पा_४,३.२॥**
युष्मदस्मदोरेतावादेशौ स्तः खञ्यणि च। यौष्माकीणः। आस्माकीनः। यौष्माकः। आस्माकः॥

**तवकममकावेकवचने॥ लसक_१०८४ = पा_४,३.३॥**
एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञि अणि च। तावकीनः। तावकः। मामकीनः। मामकः। छे तु - .

**प्रत्ययोत्तरपदयोश्च ॥ लसक_१०८५ = पा_७,२.९८॥**
मपर्यन्तयोरेतयोरेकार्थवाचिनोस्त्वमौ स्तः प्रत्यये उत्तरपदे च परतः। त्वदीयः। मदीयः। त्वत्पुत्रः। मत्पुत्रः॥

**मध्यान्मः॥ लसक_१०८६ = पा_४,३.८॥**

मध्यमः॥

**कालाट्ठञ्॥ लसक_१०८७ = पा_४,३.११॥**

कालवाचिभ्यष्ठञ् स्यात्। कालिकम्। मासिकम्। सांवत्सरिकम्। *(अव्ययानां भमात्रे टिलोपः)*। सायम्प्रातिकः। पौनः पुनिकः॥

**प्रावृष एण्यः॥ लसक_१०८८ = पा_४,३.१७॥**

प्रावृषेण्यः॥

**सायञ्चिरम्प्राह्णेप्रगे ऽव्ययेभ्यष्ट्युट्युलौ तुट् च॥ लसक_१०८९ = पा_४,३.२३॥**

सायमित्यादिभ्यश्चतुर्भ्यो ऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च। सायन्तनम्। चिरन्तनम्। प्राह्णे प्रगे अनयोरेदन्तत्वं निपात्यते। प्राह्णेतनम्। प्रगेतनम्। दोषातनम्॥

**तत्र जातः॥ लसक_१०९० = पा_४,३.२५॥**

सप्तमीसमर्थाज्जात इत्यर्थे ऽणादयो घादयश्च स्युः। स्रुघ्ने जातः स्रौघ्नः। उत्से जात औत्सः। राष्ट्रे जातो राष्ट्रियः। अवारपारे जातः अवारपारीणः, इत्यादि//

**प्रावृषष्ठप्॥ लसक_१०९१ = पा_४,३.२६॥**

एण्यापवादः। प्रावृषिकः॥

**प्रायभवः॥ लसक_१०९२ = पा_४,३.३९॥**

तत्रेत्येव। स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः॥

**सम्भूते॥ लसक_१०९३ = पा_४,३.४१॥**

स्रुघ्ने संभवति स्रौघ्नः॥

**कोशाड्ढञ्॥ लसक_१०९४ = पा_४,३.४२॥**

कौशेयम् वस्त्रम्॥

**तत्र भवः॥ लसक_१०९५ = पा_४,३.५३॥**

स्रुघ्ने भवः स्रौघ्नः। औत्सः। राष्ट्रियः॥

**दिगादिभ्यो यत्॥ लसक_१०९६ = पा_४,३.५४॥**

दिश्यम्। वर्ग्यम्॥

**शरीरावयवाच्च॥ लसक_१०९७ = पा_४,३.५५॥**

दन्त्यम्। कण्ठ्यम्। (*अध्यात्मादेष्ठञिष्यते*) अध्यात्मं भवमाध्यात्मिकम्॥

**अनुशतिकादीनां च॥ लसक_१०९८ = पा_७,३.२०॥**

एषामुभयपदवृद्धिर्ञिति णिति किति च/ आधिदैविकम्/ आधिभौतिकम्/ ऐहलौकिकम्/ पारलोकिकम्/ आकृतिगणो ऽयम्॥

**जिह्वामूलाङ्गुलेश्छः॥ लसक_१०९९ = पा_४,३.६२॥**

जिह्वामूलीयम्। अङ्गुलीयम्॥

**वर्गान्ताच्च॥ लसक_११०० = पा_४,३.६३॥**

कवर्गीयम्॥

**तत आगतः॥ लसक_११०१ = पा_४,३.७४॥**
स्रुग्घ्नादागतः स्रौग्घ्नः॥

**ठगायस्थानेभ्यः॥ लसक_११०२ = पा_४,३.७५॥**
शुल्कशालाया आगतः शौल्कशालिकः॥

**विद्यायोनिसंबन्धेभ्यो वुञ्॥ लसक_११०३ = पा_४,३.७७॥**
औपाध्यायकः। पैतामहकः॥

**हेतुमनुष्येभ्यो ऽन्यतरस्यां रूप्यः॥ लसक_११०४ = पा_४,३.८१॥**
समादागतं समरूप्यम्। पक्षे - गहादित्वाच्छः। समीयम्। विषमीयम्। देवदत्तरूप्यम्। दैवदत्तम्॥

**मयट् च॥ लसक_११०५ = पा_४,३.८२॥**
सममयम्। देवदत्तमयम्॥

**प्रभवति॥ लसक_११०६ = पा_४,३.८३॥**
हिमवतः प्रभवति हैमवती गङ्गा॥

**तद्गच्छति पथिदूतयोः॥ लसक_११०७ = पा_४,३.८५॥**
स्रुग्घ्नं गच्छति स्रौग्घ्नः पन्था दूतो वा॥

**अभिनिष्क्रामति द्वारम्॥ लसक_११०८ = पा_४,३.८६॥**
स्रुग्घ्नमभिनिष्क्रामति स्रौग्घ्नं कान्यकुब्जद्वारम्॥

**अधिकृत्य कृते ग्रन्थे॥ लसक_११०९ = पा_४,३.८७॥**
शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः॥

**सो ऽस्य निवासः॥ लसक_१११० = पा_४,३.८९॥**
स्रुग्घ्नो निवासो ऽस्य स्रौग्घ्नः॥

**तेन प्रोक्तम्॥ लसक_११११ = पा_४,३.१०१॥**
पाणिनिना प्रोक्तं पाणिनीयम्॥

**तस्येदम्॥ लसक_१११२ = पा_४,३.१२०॥**
उपगोरिदम् औपगवम्॥

इति शैषिकाः॥ ५॥

अथ विकारार्थकाः

**तस्य विकारः॥ लसक_१११३ = पा_४,३.१३४॥**
*(अश्मनो विकारे टिलोपो वक्तव्यः)*। अश्मनो विकारः आश्मः। भास्मनः। मार्त्तिकः॥

**अवयवे च प्राण्योषधिवृक्षेभ्यः॥ लसक_१११४ = पा_४,३.१३५॥**
चाद्विकारे। मयूरस्यावयवो विकारो वा मायूरः। मौर्वं काण्डं भस्म वा। पैप्पलम्॥

**मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः॥ लसक_१११५ = पा_४,३.१४३॥**
प्रकृतिमात्रान्मयड्वा स्यात् विकारावयवयोः/ अश्ममयम्, आश्मनम्/ अभक्ष्येत्यादि किम्? मौद्गः सूपः/ कार्पासमाच्छादनम्॥

**नित्यं वृद्धशरादिभ्यः॥ लसक_१११६ = पा_४,३.१४४॥**
आम्रमयम्। शरमयम्॥

**गोश्च पुरीषे॥ लसक_१११७ = पा_४,३.१४५॥**
गोः पुरीषं गोमयम्॥

**गोपयसोर्यत्॥ लसक_१११८ = पा_४,३.१६०॥**
गव्यम्। पयस्यम्॥

इति विकारार्थाः। (प्राग्दीव्यतीयाः)॥ ६॥

अथ ठगधिकारः

**प्राग्वहतेष्ठक्॥ लसक_१११९ = पा_४,४.१॥**
तद्वहतीत्यतः प्राक् ठगधिक्रियते॥

**तेन दीव्यति खनति जयति जितम्॥ लसक_११२० = पा_४,४.२॥**
अक्षैर्दीव्यति खनति जयति जितो वा आक्षिकः॥

**संस्कृतम्॥ लसक_११२१ = पा_४,४.३॥**
दध्ना संस्कृतम् दाधिकम्। मारीचिकम्॥

**तरति॥ लसक_११२२ = पा_४,४.५॥**
तेनेत्येव। उडुपेन तरति औडुपिकः॥

**चरति॥ लसक_११२३ = पा_४,४.८॥**
तृतीयान्ताद्गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात्। हस्तिना चरति हास्तिकः। दध्ना चरति दाधिकः॥

**संसृष्टे॥ लसक_११२४ = पा_४,४.२२॥**
दध्ना संसृष्टं दाधिकम्॥

**उञ्छति॥ लसक_११२५ = पा_४,४.३२॥**
बदराण्युञ्छति बादरिकः॥

**रक्षति॥ लसक_११२६ = पा_४,४.३३॥**
समाजं रक्षति सामाजिकः॥

**शब्ददर्दुरं करोति॥ लसक_११२७ = पा_४,४.३४॥**
शब्दं करोति शाब्दिकः। दर्दुरं करोति दार्दुरिकः॥

**धर्मं चरति॥ लसक_११२८ = पा_४,४.४१॥**
धार्मिकः (*अधर्माच्चेति वक्तव्यम्*)। आधर्मिकः॥

**शिल्पम्॥ लसक_११२९ = पा_४,४.५५॥**
मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः॥

**प्रहरणम्॥ लसक_११३० = पा_४,४.५७॥**
तदस्येत्येव। असिः प्रहरणमस्य आसिकः। धानुष्कः॥

**शीलम्॥ लसक_११३१ = पा_४,४.६१॥**
अपूपभक्षणं शीलमस्य आपूपिकः॥

**निकटे वसति॥ लसक_११३२ = पा_४,४.७३॥**
नैकटिको भिक्षुकः॥

इति ठगधिकारः। (प्राग्वहतीयाः)॥ ७॥

अथ यदधिकारः (प्राग्घितीयप्रकरणम्)

**प्राग्घिताद्यत्॥ लसक_११३३ = पा_४,४.७५॥**
तस्मै हितमित्यतः प्राग् यदधिक्रियते॥

**तद्वहति रथयुगप्रासङ्गम्॥ लसक_११३४ = पा_४,४.७६॥**
रथं वहति रथ्यः। युग्यः। प्रासङ्ग्यः॥

**धुरो यड्ढकौ॥ लसक_११३५ = पा_४,४.७७॥**
हलि चेति दीर्घे प्राप्ते - .

**न भकुर्छुराम्॥ लसक_११३६ = पा_८,२.७९॥**
भस्य कुर्छुरोश्चोपधाया इको दीर्घो न स्यात्। धुर्यः। धौरेयः॥

**नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु॥ लसक_११३७ = पा_४,४.९१॥**
नावा तार्यं नाव्यं जलम्। वयसा तुल्यो वयस्यः। धर्मेण प्राप्यं धर्म्यम्। विषेण वध्यो विष्यः। मूलेन आनाम्यं मूल्यम्। मूलेन समो मूल्यः। सीतया समितं सीत्यं क्षेत्रम्। तुलया संमितम् तुल्यम्॥

**तत्र साधुः॥ लसक_११३७ = पा_४,४.९८॥**
अग्रे साधुः - अग्र्यः। सामसु साधुः सामन्यः। ये चाभावकर्मणोरिति प्रकृति भावः। कर्मण्यः। शरण्यः॥

**सभाया यः॥ लसक_११३९ = पा_४,४.१०५॥**
सभ्यः॥

इति यतो ऽवधिः। (प्राग्घितीयाः)॥ ८॥

अथ छयतोरधिकारः

**प्राक् क्रीताच्छः॥ लसक_११४० = पा_५,१.१॥**
तेन क्रीतमित्यतः प्राक् छो ऽधिक्रियते॥

**उगवादिभ्यो यत्॥ लसक_११४१ = पा_५,१.२॥**
प्राक् क्रीतादित्येव। उवर्णान्ताद्गवादिभ्यश्च यत् स्यात्। छस्यापवादः। शङ्कवे हितं शङ्कव्यं दारु। गव्यम्। (*नाभि नभं च*)। नभ्यो ऽक्षः। नभ्यमञ्जनम्॥

**तस्मै हितम्॥ लसक_११४२ = पा_५,१.५॥**
वत्सेभ्यो हितो वत्सीयो गोधुक्॥

**शरीरावयवाद्यत्॥ लसक_११४३ = पा_५,१.६॥**
दन्त्यम्। कण्ठ्यम्। नस्यम्॥

**आत्मन्विश्वजनभोगोत्तरपदात्खः॥ लसक_११४४ = पा_५,१.९॥**

**आत्माध्वानौ खे॥ लसक_११४५ = पा_६,४.१६९॥**
एतौ खे प्रकृत्या स्तः। आत्मने हितम् आत्मनीनम्। विश्वजनीनम्। मातृभोगीणः॥

इति छयतोरवधिः। (प्राक्क्रीतीयाः)॥ ९॥

अथ ठञधिकारः

**प्राग्वतेष्ठञ्॥ लसक_११४६ = पा_५,१.१८॥**
तेन तुल्यमिति वतिं वक्ष्यति, ततः प्राक् ठञधिक्रियते॥

**तेन क्रीतम्॥ लसक_११४७ = पा_५,१.३७॥**
सप्तत्या क्रीतं साप्ततिकम्। प्रास्थिकम्॥

**सर्वभूमिपृथिवीभ्यामणञौ॥ लसक_११४८ = पा_५,१.४१॥**

**तस्येश्वरः॥ लसक_११४९ = पा_५,१.४२॥**
सर्वभूमिपृथिवीभ्यामणञौ स्तः। अनुशतिकादीनां च। सर्वभूमेरीश्वरः सार्वभौमः। पार्थिवः॥

**पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्॥ लसक_११५० = पा_५,१.५९॥**
एते रूढिशब्दा निपात्यन्ते॥

**तदर्हति॥ लसक_११५१ = पा_५,१.६३॥**
लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञादयः स्युः। श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः॥

**दण्डादिभ्यो यत्॥ लसक_११५२ = पा_५,१.६६॥**
एभ्यो यत् स्यात्। दण्डमर्हति दण्ड्यः। अर्घ्यः। वध्यः॥

**तेन निर्वृत्तम्॥ लसक_११५३ = पा_५,१.७९॥**
अह्ना निर्वृत्तम् आह्निकम्॥

इति ठञो ऽवधिः। (प्राग्वतीयाः)॥ १०॥

अथ त्वतलोरधिकारः

**तेन तुल्यं क्रिया चेद्वतिः॥ लसक_११५४ = पा_५,१.११५॥**
ब्राह्मणेन तुल्यं ब्राह्मणवत् अधीते। क्रिया चेदिति किम् ? गुणतुल्ये मा भूत्। पुत्रेण तुल्यः स्थूलः॥

**तत्र तस्येव॥ लसक_११५५ = पा_५,१.११६॥**
मथुरायामिव मथुरावत् स्रुग्ध्ने प्रकारः। चैत्रस्येव चैत्रवन्मैत्रस्य गावः॥

**तस्य भावस्त्वतलौ॥ लसक_११५६ = पा_५,१.११९॥**
प्रकृतिजन्यबोधे प्रकारो भावः। गोर्भावो गोत्वम्। गोता। त्वान्तं क्लीबम्॥

**आ च त्वात्॥ लसक_११५७ = पा_५,१.१२०॥**
ब्रह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते। अपवादैः सह समावेशार्थमिदम्। चकारो नञ्स्नञ्भ्यामपि समावेशार्थः। स्त्रिया भावः - स्त्रैणम्। स्त्रीत्वम्। स्त्रीता। पौस्नम्। पुंस्त्वम्। पुंस्ता॥

**पृथ्वादिभ्य इमनिज्वा॥ लसक_११५८ = पा_५,१.१२२॥**
वावचनमणादिसमावेशार्थम्॥

**र ऋतो हलादेर्लघोः॥ लसक_११५९ = पा_६,४.१६१॥**
हलादेर्लघोरृकारस्य रः स्यादिष्ठेयस्सु परतः। पृथुमृदुभृशकृशदृढपरिवृढा नामेव रत्वम्॥

**टेः॥ लसक_११६० = पा_६,४.१५५॥**
भस्य टेर्लोप इष्ठेमेयस्सु। पृथोर्भावः प्रथिमा - .

**इगन्ताच्च लघुपूर्वात्॥ लसक_११६१ = पा_५,१.१३१॥**
इगन्ताल्लघुपूर्वात् प्रातिपदिकाद्भावे ऽण् प्रत्ययः। पार्थवम्। म्रदिमा, मार्दवम्॥

**वर्णदृढादिभ्यः ष्यञ्च॥ लसक_११६२ = पा_५,१.१२३॥**
चादिमनिच्। शौक्ल्यम्। शुक्लिमा। दार्ढ्यम्। द्रढिमा॥

**गुणवचनब्राह्मणादिभ्यः कर्मणि च॥ लसक_११६३ = पा_५,१.१२४॥**
चाद्भावे। जडस्य भावः कर्म वा जाड्यम्। मूढस्य भावः कर्म वा मौढ्यम्। ब्राह्मण्यम्। आकृतिगणो ऽयम्॥

**सख्युर्यः॥ लसक_११६४ = पा_५,१.१२६॥**
सख्युर्भावः कर्म वा सख्यम्॥

**कपिज्ञात्योर्ढक्॥ लसक_११६५ = पा_५,१.१२७॥**
कापेयम्। ज्ञातेयम्।

**पत्यन्तपुरोहितादिभ्यो यक्॥ लसक_११६६ = पा_५,१.१२८॥**
सैनापत्यम्। पौरोहित्यम्॥

इति त्वतलोरधिकारः॥ ११॥

अथ भवनाद्यर्थकाः

**धान्यानां भवने क्षेत्रे खञ्॥ लसक_११६७ = पा_५,२.१॥**
भवत्यस्मिन्निति भवनम्। मुद्गानां भवनं क्षेत्रं मौद्गीनम्॥

**व्रीहिशाल्योर्ढक्॥ लसक_११६८ = पा_५,२.२॥**
व्रैहेयम्। शालेयम्॥

**हैयङ्गवीनं संज्ञायाम्॥ लसक_११६९ = पा_५,२.२३॥**
ह्योगोदोहशब्दस्य हियङ्गुरादेशः विकारार्थे खञ्च निपात्यते। दुह्यत इति दोहः क्षीरम्। ह्योगोदोहस्य विकारः - हैयङ्गवीनं नवनीतम्॥

**तदस्य संजातं तारकादिभ्य इतच्॥ लसक_११७० = पा_५,२.३६॥**
तारकाः संजाता अस्य तारकितं नभः। पण्डितः। आकृतिगणो ऽयम्॥

**प्रमाणे द्वयसज्दघ्नञ्मात्रचः॥ लसक_११७१ = पा_५,२.३७॥**
तदस्येत्यनुवर्तते। ऊरू प्रमाणमस्य - ऊरुद्वयसम्। ऊरुदघ्नम्। ऊरुमात्रम्॥

**यत्तदेतेभ्यः परिमाणे वतुप्॥ लसक_११७२ = पा_५,२.३९॥**
यत्परिमाणमस्य यावान्। तावान्। एतावान्॥

**किमिदंभ्यां वो घः॥ लसक_११७३ = पा_५,२.४०॥**
आभ्यां वतुप् स्याद् वकारस्य घश्च॥

**इदंकिमोरीश्की॥ लसक_११७४ = पा_६,३.९०॥**
दृग्दृशवतुषु इदम ईश् किमः किः। कियान्। इयान्॥

**संख्याया अवयवे तयप्॥ लसक_११७५ = पा_५,२.३९॥**
पञ्च अवयवा अस्य पञ्चतयम्॥

**द्वित्रिभ्यां तयस्यायज्वा॥ लसक_११७६ = पा_५,२.४३॥**
द्वयम्। द्वितयम्। त्रयम्। त्रितयम्॥

**उभादुदात्तो नित्यम्॥ लसक_११७७ = पा_५,२.४४॥**
उभशब्दात्तयपो ऽयच् स्यात् स चाद्युदात्तः। उभयम्॥

**तस्य पूरणे डट्॥ लसक_११७८ = पा_५,२.४८॥**
एकादशानां पूरणः एकादशः॥

**नान्तादसंख्यादेर्मट्॥ लसक_११७९ = पा_५,२.४९॥**
डटो मडागमः। पञ्चानां पूरणः पञ्चमः। नान्तात्किम् ? .

**ति विंशतेर्डिति॥ लसक_११८० = पा_६,४.१४२॥**
विंशतेर्भस्य तिशब्दस्य लोपो डिति परे। विंशः। असंख्यादेः किम् ? एकादशः॥

**षट्कतिकतिपयचतुरां थुक्॥ लसक_११८१ = पा_५,२.५१॥**
एषां थुगागमः स्याड्डटि/ षण्णां षष्ठः/ कतिथः/ कतिपयशब्दस्यासंख्यात्वे ऽप्यत एव ज्ञापकाड्डट्/ कतिपयथः/ चतुर्थः॥

**द्वेस्तीयः॥ लसक_११८२ = पा_५,२.५४॥**

डटो ऽपवादः। द्वयोः पूरणो द्वितीयः॥

**त्रेः संप्रसारणं च॥ लसक_११८३ = पा_५,२.५५॥**
तृतीयः॥

**श्रोत्रियंश्छन्दो ऽधीते॥ लसक_११८४ = पा_५,२.८४॥**
श्रोत्रियः। वेत्यनुवृत्तेश्छान्दसः॥

**पूर्वादिनिः॥ लसक_११८५ = पा_५,२.८६॥**
पूर्वं कृतमनेन पूर्वी॥

**सपूर्वाच्च॥ लसक_११८६ = पा_५,२.८७॥**
कृतपूर्वी॥

**इष्टादिभ्यश्च॥ लसक_११८७ = पा_५,२.८८॥**
इष्टमनेन इष्टी। अधीती॥

इति भवनाद्यर्थकाः॥ १२॥

अथ मत्वर्थीयाः

**तदस्यास्त्यस्मिन्निति मतुप्॥ लसक_११८८ = पा_५,२.९४॥**
गावो ऽस्यास्मिन्वा सन्ति गोमान्॥

**तसौ मत्वर्थे॥ लसक_११८९ = पा_१,४.१९॥**
तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे। गरुत्मान्। वसोः संप्रसारणं। विदुष्मान्। (*गुणवचनेभ्यो मतुपो लुगिष्टः*)। शुक्लो गुणो ऽस्यास्तीति शुक्लः पटः। कृष्णः॥

**प्राणिस्थादातो लजन्यतरस्याम्॥ लसक_११९० = पा_५,२.९६॥**
चूडालः। चूडावान्। प्राणिस्थात्किम्? शिखावान्दीपः। प्राण्यङ्गादेव। मेधावान्॥

**लोमादिपामादिपिच्छादिभ्यः शनेलचः॥ लसक_११९१ = पा_५,२.१००॥**
लोमादिभ्यः शः। लोमशः। लोमवान्। रोमशः। रोमवान्। पामादिभ्यो नः। पामनः। (ग. सू.) <u>अङ्गात्कल्याणे</u>। अङ्गना। (ग. सू.) <u>लक्ष्म्या अच्च</u>। लक्ष्मणः। पिच्छादिभ्य इलच्। पिच्छिलः। पिच्छवान्॥

**दन्त उन्नत उरच्॥ लसक_११९२ = पा_५,२.१०६॥**
उन्नता दन्ताः सन्त्यस्य दन्तुरः॥

**केशाद्वो ऽन्यतरस्याम्॥ लसक_११९३ = पा_५,२.१०९॥**
केशवः। केशी। केशिकः। केशवान्। (*अन्येभ्यो ऽपि दृश्यते*)। मणिवः। (*अर्णसो लोपश्च*)। अर्णवः॥

**अत इनिठनौ॥ लसक_११९४ = पा_५,२.११५॥**
दण्डी। दण्डिकः॥

**व्रीह्यादिभ्यश्च॥ लसक_११९५ = पा_५,२.११६॥**
व्रीही। व्रीहिकः॥

**अस्मायामेधास्रजो विनिः॥ लसक_११९६ = पा_५,२.१२१॥**
यशस्वी। यशस्वान्। मायावी। मेधावी। स्रग्वी॥

**वचो ग्मिनिः॥ लसक_११९७ = पा_५,२.१२४॥**
वाग्ग्मी॥

**अर्शआदिभ्यो ऽच्॥ लसक_११९८ = पा_५,२.१२७॥**
अर्शो ऽस्य विद्यते अर्शसः। आकृतिगणो ऽयम्॥

**अहंशुभमोर्युस्॥ लसक_११९९ = पा_५,२.१४०॥**
अहंयुः अहङ्कारवान्। शुभंयुस्तु शुभान्वितः॥

इति मत्वर्थीयाः॥ १३॥

अथ प्राग्दिशीयाः

**प्राग्दिशो विभक्तिः॥ लसक_१२०० = पा_५,३.१॥**
दिक्छब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः॥

**किंसर्वनामबहुभ्यो ऽद्व्यादिभ्यः॥ लसक_१२०१ = पा_५,३.२॥**
किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशो ऽधिक्रियते॥

**पञ्चम्यास्तसिल्॥ लसक_१२०२ = पा_५,३.७॥**
पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा स्यात्॥

**कु तिहोः॥ लसक_१२०३ = पा_७,२.१०४॥**
किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः। कुतः, कस्मात्॥

**इदम इश्॥ लसक_१२०४ = पा_५,३.२॥**
प्राग्दिशीये परे। इतः॥

**अन्॥ लसक_१२०५ = पा_६,४.१६७॥**
एतदः प्राग्दिशीये। अनेकाल्त्वात्सर्वादेशः। अतः। अमुतः। यतः। ततः। बहुतः। द्व्यादेस्तु द्वाभ्याम्॥

**पर्यभिभ्यां च॥ लसक_१२०६ = पा_५,३.९॥**
आभ्यां तसिल् स्यात्। परितः। सर्वत इत्यर्थः। अभितः। उभयत इत्यर्थः॥

**सप्तम्यास्त्रल्॥ लसक_१२०७ = पा_५,३.१०॥**
कुत्र। यत्र। तत्र। बहुत्र॥

**इदमो हः॥ लसक_१२०८ = पा_५,३.११॥**
त्रलो ऽपवादः। इह॥

**किमो ऽत्॥ लसक_१२०९ = पा_५,३.१२॥**
वाग्रहणमपकृष्यते। सप्तम्यन्तात्किमो ऽद्वा स्यात् पक्षे त्रल्॥

**क्वाति॥ लसक_१२१० = पा_७,२.१०५॥**
किमः क्वादेशः स्यादति। क्व। कुत्र॥

**इतराभ्यो ऽपि दृश्यन्ते॥ लसक_१२११ = पा_५,३.१४॥**
पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते। दृशिग्रहणाद्भवदादियोग एव। स भवान्। ततो भवान्। तत्र भवान्। तम्भवन्तम्। ततो भवन्तम्। तत्र भवन्तम्। एवं दीर्घायुः, देवानाम्प्रियः, आयुष्मान्॥

**सर्वैकान्यकिंयत्तदः काले दा॥ लसक_१२१२ = पा_५,३.१५॥**
सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात्॥

**सर्वस्य सो ऽन्यतरस्यां दि॥ लसक_१२१३ = पा_५,३.६॥**
दादौ प्राग्दिशीये सर्वस्य सो वा स्यात्। सर्वस्मिन् काले सदा सर्वदा। अन्यदा। कदा। यदा। तदा। काले किम्? सर्वत्र देशे॥

**इदमो र्हिल्॥ लसक_१२१४ = पा_५,३.१६॥**
सप्तम्यन्तात् काल इत्येव॥

**एतेतौ रथोः॥ लसक_१२१५ = पा_५,३.४॥**

इदम्शब्दस्य एत इत् इत्यादेशौ स्तौ रेफादौ थकारादौ च प्राग्दिशीये परे/ अस्मिन् काले एतर्हि/ काले किम्? इह देशे॥

**अनद्यतने र्हिलन्यतरस्याम्॥ लसक_१२१६ = पा_५,३.२१॥**

कर्हि, कदा। यर्हि, यदा। तर्हि, तदा॥

**एतदः॥ लसक_१२१७ = पा_५,३.५॥**

एत इत् एतौ स्तौ रेफादौ थादौ च प्राग्दिशीये। एतस्मिन् काले एतर्हि॥

**प्रकारवचने थाल्॥ लसक_१२१८ = पा_५,३.२३॥**

प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात् स्वार्थे। तेन प्रकारेण तथा। यथा॥

**इदमस्थमुः॥ लसक_१२१९ = पा_५,३.२४॥**

थालो ऽपवादः। (*एतदो ऽपि वाच्यः*)। अनेन एतेन वा प्रकारेण इत्थम्॥

**किमश्च॥ लसक_१२२० = पा_५,३.२५॥**

केन प्रकारेण कथम्॥

इति प्राग्दिशीयाः॥ १४॥

अथ प्रागिवीयाः

**अतिशायने तमबिष्ठनौ॥ लसक_१२२१ = पा_५,३.५५॥**
अतिशयविशिष्टार्थवृत्तेः स्वार्थ एतौ स्तः। अयमेषामतिशयेनाढ्यः आढ्यतमः। लघुतमः, लघिष्ठः॥

**तिङश्च॥ लसक_१२२२ = पा_५,३.५६॥**
तिङन्तादतिशये द्योत्ये तमप् स्यात्॥

**तरप्तमपौ घः॥ लसक_१२२३ = पा_१,१.२२॥**
एतौ घसंज्ञौ स्तः॥

**किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे॥ लसक_१२२४ = पा_५,४.११॥**
किम एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे। किन्तमाम्। प्राह्णेतमाम्। पचतितमाम्। उच्चैस्तमाम्। द्रव्यप्रकर्षे तु उच्चैस्तमस्तरुः॥

**द्विवचनविभज्योपपदे तरबीयसुनौ॥ लसक_१२२५ = पा_५,३.५७॥**
द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः। पूर्वयोरपवादः। अयमनयोरतिशयेन लघुः लघुतरो लघीयान्। उदीच्याः प्राच्येभ्यः पटुतराः पटीयांसः॥

**प्रशस्यस्य श्रः॥ लसक_१२२६ = पा_५,३.६०॥**
अस्य श्रादेशः स्यादजाद्योः परतः॥

**प्रकृत्यैकाच्॥ लसक_१२२७ = पा_६,४.१६३॥**
इष्ठादिष्वेकाच् प्रकृत्या स्यात्। श्रेष्ठः, श्रेयान्॥

**ज्य च॥ लसक_१२२८ = पा_५,३.६१॥**
प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः। ज्येष्ठः॥

**ज्यादादीयसः॥ लसक_१२२९ = पा_६,४.१६०॥**
आदेः परस्य। ज्यायान्॥

**बहोर्लोपो भू च बहोः॥ लसक_१२३० = पा_६,४.१५८॥**
बहोः परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः। भूमा। भूयान्॥

**इष्ठस्य यिट् च॥ लसक_१२३१ = पा_६,४.१५९॥**
बहोः परस्य इष्ठस्य लोपः स्याद् यिडागमश्च। भूयिष्ठः॥

**विन्मतोर्लुक्॥ लसक_१२३२ = पा_५,३.६५॥**
विनो मतुपश्च लुक् स्यादिष्ठेयसोः। अतिशयेन स्रग्वी स्रजिष्ठः। स्रजीयान्। अतिशयेन त्वग्वान् त्वचिष्ठः। त्वचीयान्॥

**ईषदसमाप्तौ कल्पब्देश्यदेशीयरः॥ लसक_१२३३ = पा_५,३.६७॥**
ईषदूनो विद्वान् विद्वत्कल्पः। विद्वद्देश्यः। विद्वद्देशीयः। पचतिकल्पम्॥

**विभाषा सुपो बहुच् पुरस्तात्तु॥ लसक_१२३४ = पा_५,३.६८॥**
ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात्स च प्रागेव न तु परतः। ईषदूनः पटुर्बहुपटुः। पटुकल्पः। सुपः किम् ? जयति कल्पम्॥

**प्रगिवात्कः॥ लसक_१२३५ = पा_५,३.७०॥**
इवे प्रतिकृतावित्यतः प्राक्काधिकारः॥

**अव्ययसर्वनाम्नामकच् प्राक् टेः॥ लसक_१२३६ = पा_५,३.७१॥**

कापवादः। तिङश्चेत्यनुवर्तते॥

**अज्ञाते॥ लसक_१२३७ = पा_५,३.७३॥**

कस्यायमश्वो ऽश्वकः/ उच्चकैः/ नीचकैः/ सर्वके। (*ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र सुबन्तस्य*)/ युष्मकाभिः। युवकयोः। त्वयका॥

**कुत्सिते॥ लसक_१२३८ = पा_५,३.७४॥**

कुत्सितो ऽश्वो ऽश्वकः॥

**किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्॥ लसक_१२३९ = पा_५,३.९२॥**

अनयोः कतरो वैष्णवः। यतरः। ततरः॥

**वा बहूनां जातिपरिप्रश्ने डतमच्॥ लसक_१२४० = पा_५,३.९३॥**

जातिपरिप्रश्न इति प्रत्याख्यातमाकरे। बहूनां मध्ये एकस्य निर्धारणे डतमज्वा स्यात्। कतमो भवतां कठः। यतमः। ततमः। वाग्रहणमकजर्थम्। यकः। सकः॥

इति प्रागिवीयाः॥ १५॥

अथ स्वार्थिकाः

**इवे प्रतिकृतौ॥ लसक_१२४१ = पा_५,३.९६॥**
कन् स्यात्। अश्व इव प्रतिकृतिरश्वकः। (*सर्वप्रातिपदिकेभ्यः स्वार्थे कन्*)। अश्वकः॥

**तत्प्रकृतवचने मयट्॥ लसक_१२४२ = पा_५,४.२१॥**
प्राचुर्येण प्रस्तुतं प्रकृतम्, तस्य वचनं प्रतिपादनम्। भावे अधिकरणे वा ल्युट्। आद्ये प्रकृतमन्नमन्नमयम्। अपूपमयम्। द्वितीये तु अन्नमयो यज्ञः। अपूपमयं पर्व॥

**प्रज्ञादिभ्यश्च॥ लसक_१२४३ = पा_५,४.३८॥**
अण् स्यात्। प्रज्ञ एव प्राज्ञः। प्राज्ञी स्त्री। दैवतः। बान्धवः॥

**बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्॥ लसक_१२४४ = पा_५,४.४२॥**
बहूनि ददाति बहुशः। अल्पशः। (*आद्यादिभ्यस्तसेरुपसंख्यानम्*)। आदौ आदितः। मध्यतः। अन्ततः। पृष्ठतः। पार्श्वतः। आकृतिगणो ऽयम्। स्वरेण, स्वरतः। वर्णतः॥

**कृभ्वस्तियोगे संपद्यकर्तरि च्विः॥ लसक_१२४५ = पा_५,४.५०॥**
(*अभूततद्भाव इति वक्तव्यम्*)/ विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात् स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे//

**अस्य च्वौ॥ लसक_१२४६ = पा_७,३.३२॥**
अवर्णस्य ईत्स्यात् च्वौ। वेर्लोपे च्व्यन्तत्वादव्ययत्वम्। अकृष्णः कृष्णः संपद्यते तं करोति कृष्णीकरोति। ब्रह्मीभवति। गङ्गीस्यात्। (*अव्ययस्य च्वावीत्वं नेति वाच्यम्*)। दोषाभूतमहः। दिवाभूता रात्रिः॥

**विभाषा साति कार्त्स्न्ये॥ लसक_१२४७ = पा_५,४,५२॥**
च्विविषये सातिर्वा स्यात्साकल्ये॥

**सात्पदाद्योः॥ लसक_१२४८ = पा_८,३.१११॥**
सस्य षत्वं न स्यात्। कृत्स्नं शस्त्रमग्निः संपद्यते ऽग्निसाद्भवति। दधि सिञ्चति॥

**च्वौ च॥ लसक_१२४९ = पा_७,४.२६॥**
च्वौ परे पूर्वस्य दीर्घः स्यात्। अग्नीभवति॥

**अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच्॥ लसक_१२५० = पा_५,४.५७॥**
द्व्यजेवावरं न्यूनं न तु ततो न्यूनमनेकाजिति यावत्। तादृशमर्धं यस्य तस्माड्डाच् स्यात् कृभ्वस्तिभिर्योगे / (*डाचि विवक्षिते द्वे बहुलम्*)। इति डाचि विवक्षिते द्वित्वम्। (*नित्यमाम्रेडिते डाचीति वक्तव्यम्*)। डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात्। इति तकारपकारयोः पकारः। पटपटाकरोति। अव्यक्तानुकरणात्किम् ? ईषत्करोति। द्व्यजवरार्धात्किम् ? श्रत्करोति। अवरेति किम् ? खरटखरटाकरोति। अनितौ किम् ? पटिति करोति॥

इति स्वार्थिकाः॥ १६॥
// इति तद्धिताः॥

अथ स्त्रीप्रत्ययाः

**स्त्रियाम्॥ लसक_१२५१ = पा_४,१.३॥**
अधिकारो ऽयम्। समर्थानामिति यावत्॥

**अजाद्यतष्टाप्॥ लसक_१२५२ = पा_४,१.४॥**
अजादीनामकारान्तस्य च वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये टाप् स्यात्। अजा। एडका। अश्वा। चटका। मूषिका। बाला। वत्सा। होडा। मन्दा। विलाता। इत्यादि॥ मेधा। गङ्गा। सर्वा॥

**उगितश्च॥ लसक_१२५३ = पा_४,१.६॥**
उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप्स्यात्। भवती। भवन्ती। पचन्ती। दीव्यन्ती॥

**टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः॥ लसक_१२५४ = पा_४,१.१५॥**
अनुपसर्दनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप्स्यात्। कुरुचरी। नदट् नदी। देवट् देवी। सौपर्णेयी। ऐन्द्री। औत्सी। ऊरुद्वयसी। ऊरुदघ्नी। ऊरुमात्री। पञ्चतयी। आक्षिकी। लावणिकी। यादृशी। इत्वरी। (*नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्*)। स्त्रैणी। पैंस्नी। शाक्तीकी। याष्टीकी। आढ्यङ्करणी। तरुणी। तलुनी॥

**यञश्च॥ लसक_१२५५ = पा_४,१.१६॥**
यञन्तात् स्त्रियां ङीप्स्यात्। अकारलोपे कृते - .

**हलस्तद्धितस्य॥ लसक_१२५६ = पा_६,१.१५०॥**
हलः परस्य तद्धितयकारस्योपधाभूतस्य सोप ईति परे। गार्गी॥

**प्राचां ष्फ तद्धितः॥ लसक_१२५७ = पा_४,१.१७॥**
यञन्तात् ष्फो वा स्यात्स च तद्धितः॥

**षिद्गौरादिभ्यश्च॥ लसक_१२५८ = पा_४,१.४१॥**
षिद्भ्यो गौरादिभ्यश्च स्त्रियां ङीष् स्यात्। गार्ग्यायणी। नर्तकी। गौरी। अनुडुही। अनड्वाही। आकृतिगणो ऽयम्॥

**वयसि प्रथमे॥ लसक_१२५९ = पा_४,१.२०॥**
प्रथमवयोवाचिनो ऽदन्तात् स्त्रियां ङीप्स्यात्। कुमारी॥

**द्विगोः॥ लसक_१२६० = पा_४,१.४१॥**
अदन्ताद् द्विगोर्ङीप्स्यात्। त्रिलोकी। अजादित्वात्त्रिफला। त्र्यनीका सेना॥

**वर्णादनुदात्तात्तोपधात्तो नः॥ लसक_१२६१ = पा_४,१.३९॥**
वर्णवाची यो ऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप् तकारस्य नकारादेशश्च। एनी, एता। रोहिणी, रोहिता॥

**वोतो गुणवचनात्॥ लसक_१२६२ = पा_४,१.४४॥**
उदन्ताद् गुणवाचिनो वा ङीष् स्यात्। मृद्वी, मृदुः॥

**बह्वादिभ्यश्च॥ लसक_१२६३ = पा_४,१.४५॥**
एभ्यो वा ङीष् स्यात्। बह्वी, बहुः। (*कृदिकारादक्तिनः*)/ रात्री, रात्रिः। (*सर्वतो ऽक्तिन्नर्थादित्येके*)/ शकटी। शकटिः॥

**पुंयोगादाख्यायाम्॥ लसक_१२६४ = पा_४,१.४८॥**
या पुमाख्या पुंयोगात् स्त्रियां वर्तते ततो ङीष्। गोपस्य स्त्री गोपी। (*पालकान्तान्न*) - .

**प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः॥ लसक_१२६५ = पा_७,३.४४॥**

प्रत्ययस्थात्कात्पूर्वस्याकारस्येकारः स्यादापि स आप्सुपः परो न चेत्। गोपालिका। अश्वपालिका। सर्विका। कारिका। अतः किम्? नौका। प्रत्ययस्थात्किम्? शक्नोतीति शका। असुपः किम्? बहुपरिव्राजका नगरी। (*सूर्याद्देवतायां चाब्वाच्यः*)। सूर्यस्य स्त्री देवता सूर्या। देवतायां किम्? (*सूर्यागस्त्ययोश्छे च ङ्यां च*)। यलोपः। सूरी - कुन्ती मानुषीयम्॥

**इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलचार्याणामानुक् लसक_१२६६ = पा_४,१.४९॥**
एषामानुगागमः स्यात् ङीष् च। इन्द्रस्य स्त्री - इन्द्राणी। वरुणानी। भवानी। शर्वाणी। रुद्राणी। मृडानी। (*हिमारण्ययोर्महत्त्वे*)। महद्धिमं हिमानी। महदरण्यमरण्यानी। (*यवाद्दोषे*)। दुष्टो यवो यवानी। (*यवनाल्लिप्याम्*)। यवनानां लिपिर्यवनानी। (*मातुलोपाध्याययोरानुग्वा*)। मातुलानी, मातुली। उपाध्यायानी, उपाध्यायी। (*आचार्यादणत्वं च*)। आचार्यस्य स्त्री आचार्यानी। (*अर्यक्षत्रियाभ्यां वा स्वार्थे*), अर्याणी, अर्या। क्षत्रियाणी, क्षत्रिया॥

**क्रीतात्करणपूर्वात्॥ लसक_१२६७ = पा_४,१.५०॥**
क्रीतान्ताददन्तात् करणादेः स्त्रियां ङीष्स्यात्। वस्त्रक्रीती। क्वचिन्न। धनक्रीता॥

**स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्॥ लसक_१२६८ = पा_४,१.५४॥**
असंयोगोपधमुपसर्जनं यत् स्वाङ्गं तदन्ताददन्तान् ङीष्वा स्यात्। केशानतिक्रान्ता - अतिकेशी, अतिकेशा। चन्द्रमुखी चन्द्रमुखा। असंयोगोपधात्किम्? सुगुल्फा। उपसर्जनात्किम्? शिखा॥

**न क्रोडादिबह्वचः॥ लसक_१२६९ = पा_४,१.५६॥**
क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष्। कल्याणक्रोडा। आकृतिगणो ऽयम्। सुजघना॥

**नखमुखात्संज्ञायाम्॥ लसक_१२७० = पा_४,१.५८॥**
न ङीष्॥

**पूर्वपदात्संज्ञायामगः॥ लसक_१२७१ = पा_८,४.३॥**
पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात् संज्ञायां न तु गकारव्यवधाने। शूर्पणखा। गौरमुखा। संज्ञायां किम्? ताम्रमुखी कन्या॥

**जातेरस्त्रीविषयादयोपधात्॥ लसक_१२७२ = पा_४,१.६३॥**
जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् स्यात्। तटी। वृषली। कठी। बह्वृची। जातेः किम्? मुण्डा। अस्त्रीविषयात्किम्? बलाका। अयोपधात्किम्? क्षत्रिया। (*योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः*)। हयी। गवयी। मुकयी। हलस्तद्धितस्येति यलोपः। मनुषी। (*मत्स्यस्य ङ्याम्*)। यलोपः। मत्सी॥

**इतो मनुष्यजातेः॥ लसक_१२७३ = पा_४,१.६५॥**
ङीष्। दाक्षी॥

**ऊङुतः॥ लसक_१२७४ = पा_४,१.६६॥**
उदन्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात्। कुरूः। अयोपधात्किम्? अध्वर्युर्ब्राह्मणी॥

**पङ्गोश्च॥ लसक_१२७५ = पा_४,१.६८॥**
पङ्गूः। (*श्वशुरस्योकाराकारलोपश्च*)। श्वश्रूः॥

**ऊरूत्तरपदादौपम्ये॥ लसक_१२७६ = पा_४,१.६९॥**
उपमानवाची पूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात्। करभोरूः॥

**संहिताशफलक्षणवामादेश्च॥ लसक_१२७७ = पा_४,१.७०॥**
अनौपम्यार्थं सूत्रम्। संहितोरूः। शफोरूः। लक्षणोरूः। वामोरूः॥

**शार्ङ्गरवाद्यञो ङीन्॥ लसक_१२७८ = पा_४,१.७३॥**
शार्ङ्गरवादेरञो यो ऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात्/ शार्ङ्गरवी/ बैदी। ब्राह्मणी। (*नृनरयोर्वृद्धिश्च*)/ नारी॥

**यूनस्तिः॥ लसक_१२७९ = पा_४,१.७७॥**

युवञ्छब्दात् स्त्रियां तिः प्रत्ययः स्यात्। युवतिः॥